PolioPlus



# IMMUNIZATION AN ASSURANCE OF GOOD HEALTH TO CHILDREN

## VACCINATIONS When and How Many

| Age to Start Vaccination | Name of Vaccine | Name of Disease | How Many Times |
|---|---|---|---|
| Birth | **BCG** | **Tuberculosis** | Once |
| 6 weeks | **Polio** | **Polio** | Three times with intervals of at least one month |
| 6 weeks | **DPT** | **Diphtheria Pertussis (Whooping Cough) Tetanus** | Three times with intervals of at least one month |
| 9 months | **Measles** | **Measles** | Once |

**Babies should receive all vaccinations by the time they are twelve months old.**

Pregnant women should get themselves vaccinated against Tetanus (TT) twice—in an interval of at least one month—during the later stages of pregnancy.

**HEALTHY CHILD—NATION'S HOPE & PRIDE**

Design courtesy : World Health Organisation

# क्रिकेट्क्रीडा

| | |
|---|---|
| गिरिः - अहं श्वः क्रिकेट् द्रष्टुं गमिष्यामि । भवान् अपि आगमिष्यति वा ? | Tomorrow I am going to watch the cricket match. Will you also come with me ? |
| मधुः - आगन्तुम् इच्छा अस्ति । किन्तु क्रिकेट्विषये अहं किमपि न जानामि । | I would like to come. But I don't know anything about cricket. |
| गि - चिन्ता मास्तु । मम अपि तद्विषये ज्ञानं सामान्यमेव । | Don't worry, I don't know much about it myself. |
| म - श्वः के कैः सह क्रीडिष्यन्ति ? | Who is playing against whom tomorrow? |
| गि - भारतीयाः श्रीलङ्काजनैः सह । | Indians are playing against Sri Lanka. |
| म - क्रीडा कदा आरभ्य कियत्पर्यन्तं प्रचलिष्यति ? | When will the match start and when will it end ? |
| गि - अपराह्णे सार्धद्विवादनतः रात्रौ एकादश-वादनपर्यन्तम् । एषा अहर्निशं क्रीडा । | From 2.30 in the afternoon to about 11.00 in the night. It's a day-night match. |
| म - प्रत्येकस्मिन् गणे कति क्रीडापटवः भवन्ति ? | How many players will there be in the team ? |
| गि - एकादश जनाः । तेषु एव एकः नायकः भवति । | 11 players. One among them will be the captain. |
| म - क्रीडापटवः कथं बाह्याः भवन्ति ? | How are the batsmen given out ? |
| गि - बहुप्रकारेण । यथा - दण्डप्रहारकेण प्रहृतः कन्दुकः भूमौ पतनात् पूर्वं केनापि रक्षकेण गृह्यते चेत् सः दण्डप्रहारकः बाह्यः भवति । | It happens in many ways. Like-when a fielder catches the ball hit by a batsman before it bounces on the ground. |
| म - अन्येन केन प्रकारेण बाह्याः भवन्ति ? | How else ? |
| गि - तत् सर्वं श्वः तत्रैव विवरिष्यामि । इदानीम् अहं विवृणोमि चेत् सर्वं ज्ञातुं न शक्यते । | All these things I will explain to you there tomorrow. You won't understand it, if I explain it now. |
| म - भवतु, श्वः चिटिका लभ्येत वा ? | Okay. Will tickets be available tomorrow ? |
| गि - श्वः तु न लभ्यते । अतः अहं चिटिकाद्वयं ह्यः एव क्रीतवान् अस्मि । | It wan't be available tomorrow. So I have already bought 2 tickers. |
| म - तर्हि अहं श्वः अपराह्णे पुनः मेलिष्यामि । पुनर्मिलामः । | Okay then. We will meet tomorrow afternoon. |



# चन्दमामा

अक्टोबर् -१९९७



## अन्तरङ्गम्






प्रतिकृतिमूल्यं रू. ६-००

वार्षिकं ग्राहकशुल्कं रू. ७२-००




# चन्दमामा

संस्थापकः - 'चक्रपाणिः' सञ्चालकः - 'नागिरेड्डी'

## सुवर्णसमागमः

सहस्राधिकाः ध्येयवादिनः तपस्विनः देशभक्ताः ब्रिटिष्शासनस्य विरुद्धं कथं सङ्ग्रामं कृतवन्तः इति इतिहासस्य विशिष्टघटनानां द्वारा गतसञ्चिकायां निरूपितम् आसीत् अस्माभिः। ते सर्वे देशभक्ताः एतां भूमिं मातरं मन्यन्ते स्म । अतः एव ते प्राणभयमपि परित्यज्य मातरं बन्धमुक्तां कृतवन्तः । समर्थरामदाससदृशाः बहवः महापुरुषाः देशभक्ताः एतं देशं 'देवं' भावयन्ति स्म । एतं विचारं विशिष्टरूपेण अभिव्यक्तीकृतवान् श्री अरविन्दवर्यः (१८७२-१९५०) । तेन लिखितं व्यक्तिगतं पत्रम् एकं ब्रिटिष्-आरक्षकैः प्रकाशितम् । तस्मिन् तेन लिखितम् अस्ति - "एषा भारतभूमिः न मृन्मयभूखण्डमात्रम्, अपि तु देवता, मङ्गल-दायिनी ........." इति ।

प्रायः भवत्सु बहवः जानीयुः यत् श्री अरविन्दः एव ऐदम्प्राथम्येन भारतमातुः सम्पूर्णस्वातन्त्र्यार्थम् अनुरोधं कृतवान् इति । वयं तस्य जन्मदिने अगस्ट्मासस्य पञ्चदशे दिनाङ्के एव स्वातन्त्र्यं प्राप्तवन्तः स्मः इति तु अविचिन्तितं सौभाग्यम् अस्माकम् ।

अस्मिन् वर्षे अस्माकं देशे विदेशेषु च तस्य १२५तमं जन्मदिनं सर्वत्र आचरिष्यते, यच्च दिनं भारतस्य स्वातन्त्र्यस्य स्वर्णमहोत्सवदिनत्वेन अपि आचर्यते ।

श्री अरविन्दः अस्माकं देशस्य महत्सु दार्शनिकेषु अन्यतमः । सः उक्तवान् यत् सामूहिकप्रार्थनया सामान्याः मानवाः अपि दैवत्वं प्राप्तुं शक्नुवन्ति इति । कृतज्ञतापूर्वकं तस्य स्मरणं कुर्वन्तः वयं तदीयविचारस्य प्रचारम् अपि यदि कुर्याम तर्हि वरं खलु ?

सम्पुटः - १४ अक्टोबर् - १९९७ सञ्चिका - ७

प्रतिकृतिमूल्यं रू. ६.०० * वार्षिकं ग्राहकशुल्कं रू. ७२.००



# कठिनशब्दानां सान्दर्भिकाः अर्थाः

आयातः - import
आह्वानम् - challange
उत्तानशयः - lying on the back
औत्तराहः - north Indian/ northerner
औरसपुत्रः - son
कणिशम् - cornhead
करांशुकम् - shirt (jubba)
कदम्बः - duck
कविपुङ्गवः - great poet
खनी - mines
चित्रम् - wonder
जङ्घा - knee
जीविका - livelihood
जूर्णः - maize
तरीतुम् - to swim
दलति - crushed into pieces
दीर्घश्मश्रुलः - long bearded
नखशिखान्तम् - from tip to toe
नालः - tube
निर्यातः - export
निर्यासः - gum
परिव्राजकः - a wandering religious mendicant
प्रतिरोधः - opposition
भाटकम् - rent
मुद्गरः - hammer
वत्सः - calf
वयनम् - weaving
वराटिका - cowrie
वस्तुवाहकम् - lorry
वातवसनम् - a sail
विक्रमः - record
वितर्दिः - a raised ground in the centre of a temple
वितानम् - pandal
वृक्षभेदी - chistle
वेमा - loom
शास्ति - to rule
शिलाप्रस्तरः - a slab of stone
सन्धिः - agreement
साक्ष्यचिह्नम् - evidence
स्थूलकाष्ठम् - log

वार्ताविशेषः -

# अस्माकं नूतनः अध्यक्षः

निर्धनकुले जन्म प्राप्य अपि अचलश्रद्धया, निरन्तर-परिश्रमेण, महता आत्मविश्वासेन च अत्युन्नतं पदं प्राप्तवन्तः जनाः लोके विरलाः एव । तादृशेषु विरलेषु अमेरिकादेशस्य अध्यक्षः अब्राहं लिङ्कन् अपि अन्यतमः आसीत् । अस्माकं एकादशः राष्ट्रपतिः श्री के. आर्. नारायणन् अपि तादृशेषु अन्यतमः एव । एषः देशस्य कस्मिंश्चित् कोणे विद्यमाने कुग्रामे निर्धनकुले जन्म प्राप्य, परिश्रमेण अध्ययनं कृत्वा क्रमशः एकैकं पदम् आरुह्य अधुना एतत् स्थानं प्राप्तवान् अस्ति । श्री. कोचेरिल् रामन् नारायणन्वर्यः केरलराज्यस्य कोट्टायंसमीपे विद्यमाने उलपूर्ग्रामे १९२० तमे वर्षे नवम्बर्मासे २७ तमे दिनाङ्के जन्म प्राप्तवान् । नारायणन्-वर्यस्य पिता कश्चित् आयुर्वेद-वैद्यः आसीत् । नारायणन्वर्यः स्वस्य सप्तमे वयसि एकस्मिन् सर्वकारीये विद्यालये प्रवेशितः । उच्च-शिक्षासमये धनस्य अभावेन विद्यालयस्य शुल्कं दातुं तेन बहु कष्टम् अनुभूतं चेदपि अत्यन्तं श्रद्धया अध्ययनं कृत्वा उत्तमान् अङ्कान् प्राप्नोति स्म सः ।



१९४२तमे वर्षे तिरुवनन्तपुरंविश्वविद्यालये आंग्लभाषाम् ऐच्छिकविषयत्वेन स्वीकृत्य विद्यालयस्य एव प्रथमः सन् पदवीं सम्पादितवान् नारायणन्वर्यः । अध्ययनस्य अनन्तरं कानिचन दिनानि एकस्मिन् स्वायत्तविद्यालये अध्यापकः सन् सः कार्यं कृतवान् । पश्चात् तत् परित्यज्य देहलीं गत्वा सः भारतीय-ओवर्सीस्विभागे सहायकस्य उद्योगं प्राप्तवान् । पश्चात् तदपि कार्यं परित्यज्य ततोऽपि न्यूनवेतनं प्राप्नुवन् पत्रिकामुद्रणालयस्य कार्ये आत्मानं योजितवान् सः । पश्चात् कानिचन दिनानि हिन्दुपत्रिकायां, मुम्बैतः प्रकाश्यमानायां टैम्स् आफ् इण्डिया पत्रिकायां च उपसम्पादकः सन् सः कार्यं कृतवान् । ''कौटिल्य'' इति काव्यनाम्ना तेन बहवः प्रबन्धाः अपि लिखिताः सन्ति । १९४४तमे वर्षे एप्रिल्मासस्य दशमे दिनाङ्के तेन महात्मगान्धिवर्यस्य सन्दर्शनं कृतम् । तस्मिन् दिने गान्धिवर्यस्य मौनव्रतम् आसीत् । अतः तस्य प्रश्नानाम् उत्तरं, तेनैव पूर्वं लिखितानां पिहितपत्राणाम् उपरि लिखित्वा दत्तं गान्धिवर्येण । तानि पिहितपत्राणि अद्यापि नारायणन्वर्येण सुरक्षितं स्थापितानि सन्ति ।

१९४५तमे वर्षे सः इंग्लेण्ड् गत्वा लण्डन् स्कूल् आफ् एकनामिक्स् संस्थां प्रविश्य प्रा॰ हेराल्ड् जेलास्किवर्यस्य अभिमानपात्रम् अपि अभवत् । १९४७तमे वर्षे सः भारतं प्रत्यागतवान् । तदा जवहरलालनेहरूवर्येण विदेशाङ्गविभागे नियुक्तः सः, बर्मा देशस्य राजधान्यां रङ्गूननगरे विद्यमानं राजदूतकार्यालयं प्रति प्रेषितः । पश्चात् सः जपान्, ब्रिटन्, वियट्नाम् इत्यादिषु देशेषु विद्यमानेषु राजदूत-कार्यालयेषु अपि कार्यं कृतवान् । तदनन्तरं थायलेण्ड्, टर्कि, चैनादेशे च भारतस्य राजदूतः आसीत् ।

१९७८तमे वर्षे सर्वकारीयकार्यात् निवृत्तः सन् सः देहलीनगरे विद्यमाने जवहरलालनेहरूविश्वविद्यालये उपकुलपतिपदम् अलङ्कृतवान् । १९८०तमे वर्षे प्रधानमन्त्रिण्या श्रीमती इन्दिरागान्धिवर्यया सः राजदूतत्वेन अमेरिकादेशं प्रति प्रेषितः ।

प्रधानमन्त्री राजीवगान्धी नारायणन्वर्यं राजकीय-प्रवेशार्थं प्रचोदितवान् । केरलस्य ओट्टपालंक्षेत्रतः लोकसभां प्रति निर्वाचितः सः, आदौ योजना-विदेशाङ्गशाखयोः उपमन्त्री सन् उत्तमां सेवां कृतवान् । ओट्टपालंक्षेत्रात् एव सः पुनः द्विवारं लोकसभां प्रति निर्वाचितः । पश्चात् सः भारतस्य उपराष्ट्रपतिपदार्थं चितः अभवत् ।

अधुना राष्ट्रस्य अत्युन्नते पदे सन् अपि सः बाल्यजीवनं न विस्मृतवान् अस्ति । ''भारतीयाः जनाः मयि यत् गौरवम् आदरं च प्रदर्शितवन्तः तत् अहं विनयेन अङ्गीकरोमि । तेषाम् अभिलाषाणां पूरणार्थम् अहं यथाशक्ति प्रयत्नं करिष्यामि'' इति वदति सः ।



# चिन्तितम् अचिन्तितं च

अमरपुरस्य नृपः अमरपतिः निष्ठुरस्वभाववान् आसीत् । सः सर्वदा स्वचिन्तनानुसारम् एव निर्णयं स्वीकरोति स्म, न तु अन्येषाम् अभिप्रायस्य अनुगुणम् । आस्थाने मन्त्री भवेत् इति सम्प्रदायः आसीत् इति कारणतः कञ्चित् वृद्धं तस्मिन् स्थाने नियोजितवान् आसीत् राजा । कस्मिंश्चित् अपि विषये तस्य अभिप्रायं न पृच्छति स्म सः ।

कदाचित् गुप्तचराणां द्वारा अमरपतिः ज्ञातवान् यत् राज्ये बहुजनाः सुखेन सन्तृप्त्या च न सन्ति इति । तस्मिन् विषये अपि सः केनचित् अपि सह चर्चां न कृतवान् । 'प्रजानाम् असन्तृप्तेः कारणं मया एव ज्ञातव्यम्' इति चिन्तयन् सः वेषान्तरं धृत्वा नगरपर्यटनार्थं गतवान् ।

यदा सः कस्याञ्चित् लघुवीथ्यां गच्छन् आसीत् तदा मृच्छदगृहात् दम्पत्योः सम्भाषणं श्रुतम् । तत्रैव वातायनस्य पार्श्वे निलीय स्थित्वा तत् श्रुतवान् राजा अमरपतिः ।

''मासत्रयात् आरभ्य अवलोकयन्ती एव अस्मि । भवान् सर्वदा किमपि चिन्तयति किल ? कारणं वा वदतु तावत्'' इति पतिम् उक्तवती पत्नी ।

''किम् इति वदामि ? चिन्तितम् एकम् अपि कार्यपथं न आगच्छति'' इति उक्तवान् पतिः ।

'जनाः किमर्थं सुखेन न सन्ति इति इदानीं मया ज्ञातम् । ते यथा चिन्तयन्ति तथा न भवति । अतः एव ते असन्तृप्ताः सन्ति' इति चिन्तितवान् राजा अमरपतिः ।

ततः प्रासादं गतः अमरपतिः आरात्रि एतं विषयम् अधिकृत्य एव चिन्तितवान् । ततः सः निर्णीतवान् यत् कांश्चन जनान् आहूय ते यथा चिन्तयन्ति तथैव कारयित्वा ते सन्तुष्टाः

सुभद्रा

भवन्ति वा न वा इति अवलोकनीयम् इति ।

अनन्तरदिने यदा अमरपतिः स्नानं समाप्य आगतः तदा सेवकः रजतचषकेण क्षीरम् आनीय तस्मै दत्तवान् । परन्तु दानात् पूर्वं सेवकः क्षीरं सम्यक् न अवलोकितवान् स्यात् । क्षीरं नष्टम् आसीत् । विलम्बेन विषयं ज्ञातवान् सेवकः बहु उद्विग्नः जातः ।

अमरपतिः तं निर्निमेषदृष्ट्या पश्यन् - ''इदानीं भवतः मनसि यत् अस्ति तदेव वदतु । सत्यम् एव वक्तव्यम्'' इति उक्तवान् ।

''उष्णक्षीरं मुखस्य उपरि भवान् क्षिपेत् इति चिन्तयन् अस्मि महाराज'' इति उक्तवान् सेवकः ।



सेवकः यथा चिन्तितवान् तथैव कृतवान् अमरपतिः । सेवकः रुदन् ततः गतवान् । तस्मिन् दिने भटाः राजसभां कञ्चित् लघुचोरं गृहीत्वा आनीतवन्तः आसन् । तस्य अपराधः अपि प्रमाणीकृतः अभवत् । अमरपतिः 'दण्डम् अदत्त्वा एषः सन्तोषणीयः' इति चिन्तयन् - ''इदानीं मया किं क्रियते इति भवान् चिन्तयति ? सत्यं वदतु'' इति उक्तवान् ।

''वेत्रताडनैः मां भवान् दण्डयेत् इति भीतः अस्मि महाराज !'' इति उक्तवान् सः चोरः ।

तस्मै तादृशम् एव दण्डनम् आज्ञापितवान् अमरपतिः ।

तस्मिन् दिने रात्रौ महाराज्ञी अमरपतये ताम्बूलं ददती पृष्टवती - ''एकवारं मातृगृहं गत्वा मातापितरौ दृष्ट्वा आगन्तव्यम् इति मम इच्छा । अनुमन्यते खलु भवान् ?'' इति ।

अमरपतिः ताम्बूलं चर्वन् - ''मत्तः भवती कीदृशम् उत्तरं निरीक्षते ?'' इति हसन् एव पृष्टवान् ।

''मम मातापितरौ मासद्वयात् पूर्वम् आगतवन्तौ इति कारणतः इदानीं गमनं मास्तु इति भवान् वदेत् इति चिन्तयामि'' इति उक्तवती महाराज्ञी ।

''आम् । तदेव वदामि'' इति उक्तवान् अमरपतिः ।

राज्ञी दीर्घं निःश्वस्य म्लानमुखी सती उत्थाय स्वशयनागारं गतवती ।

अमरपतिः प्रवृत्ताः सर्वाः घटनाः स्मृतवान् । 'सर्वैः यथा चिन्तितं तथैव सम्पन्नम् । परन्तु कोऽपि सन्तुष्टः न जातः । अतः प्रजानां चिन्तायाः कारणं अन्यत् एव

SAN–E2



स्यात्' इति चिन्तितवान् सः ।

तस्यां रात्रौ पुनः नगरसञ्चारार्थं प्रस्थितः राजा अमरपतिः ।

एतस्मिन् अवसरे बृहद्भवनस्य पुरतः तृणानाम् उपरि आसन्दे उपविष्टवन्तौ दम्पती दृष्टौ तेन । तत्रैव पार्श्वे स्थित्वा तयोः सम्भाषणं श्रुतवान् राजा ।

''एतेषु दिनेषु भवान् पूर्ववत् उत्साही न दृश्यते । सर्वदा चिन्ताक्रान्तः इव दृश्यते । एतस्य किं वा कारणम् ?'' इति पृष्टवती पत्नी ।

ततः पतिः उक्तवान् - ''एतेषु दिनेषु मम जीवनं यान्त्रिकम् अभवत् । जीवने किमपि परिवर्तनं न दृश्यते । अचिन्तितं किमपि जीवने क्वचित् भवति चेत् एव वरं स्यात्'' इति ।

'यदि अचिन्तितं भविष्यति तर्हि जनाः सन्तुष्टाः भवन्ति' इति ज्ञातवान् राजा अमरपतिः अनन्तरदिने 'अन्येषां मनसि यत् अस्ति तत् ज्ञात्वा तस्य विरुद्धं कारयित्वा जनाः सन्तोषणीयाः' इति चिन्तितवान् ।

अनन्तरदिने सभागमनसमये सेवकेन आनीते करांशुके स्कन्धभागे किञ्चित् छिद्रम् आसीत् । यदा राज्ञा तत् धृतं तदा तत् ज्ञातम् । सेवकः भीत्या - ''क्षम्यतां महाप्रभो ! अन्यत् वस्त्रम् आनयामि'' इति उक्तवान् ।

''इदानीं मया किं क्रियते इति भवान् चिन्तयति ?'' इति पृष्टवान् अमरपतिः ।

''मां भवान् दण्डयेत् इति, एतेन वेषेण निश्चयेन सभां न गमिष्यति इति च अहं चिन्तितवान्'' इति उक्तवान् सेवकः ।

''भवन्तं न दण्डयामि । एतेन एव वेषेण सभां गच्छामि'' इति उक्त्वा अमरपतिः आस्थानं प्रति गतवान् ।

आस्थाने यदा कार्यक्रमाः प्रचलन्तः आसन् तदा मन्त्री कदाचित् लघुनिद्रामग्नः अभवत् । एतत् अवलोकितवान् अमरपतिः पार्श्वे स्थितं सूचितवान् यत् मन्त्रिणं जागरयतु इति । सः तथैव कृतवान् ।

''क्षम्यतां महाराज'' इति वदन् आसन्दे सम्यक् उपविष्टवान् मन्त्री ।

''महामन्त्रिन् ! इदानीं मया किम् उच्यते इति चिन्तितवान् अस्ति भवान् ?'' इति पृष्टवान् अमरपतिः ।

अनिरीक्षितम् एतं प्रश्नं श्रुत्वा आश्चर्यचकितः मन्त्री उक्तवान् - ''मम आस्थाने कुम्भकर्णसदृशः मन्त्री अस्ति इत्येतत्

लज्जास्पदविषयः इति भवान् वदेत्'' इति ।

मन्त्रिणः चिन्तनस्य विरुद्धम् एव वक्तव्यम् इति चिन्तयन् राजा - ''तथा नास्ति । भवादृशः मन्त्री अस्ति इत्येतत् तु अभिमानस्य विषयः'' इति उक्तवान् ।

तस्य वचनं श्रुत्वा सभासदः सर्वे हसितवन्तः । 'उपहासरूपेण राजा तत् वचनम् उक्तवान्' इति भावितवान् मन्त्री अवमानेन खिन्नः जातः ।

तस्मिन् दिने सायङ्काले राजा अमरपतिः उद्याने अटन् आसीत् । तदा वायोः कारणतः पाटलसस्यस्य कण्टकं राज्ञः पादे लग्नम् अभवत् । वाटिकायाः वृद्धरक्षकः धावन् आगत्य कण्टकं दूरे क्षिप्त्वा - ''क्षम्यतां महाराज ! पुनः कदापि एतादृशः लोपः यथा न भवेत् तथा जागरूकः भवामि'' इति विनयेन उक्तवान् ।

''यत् प्रवृत्तं तदर्थं मया किं क्रियते इति चिन्तयति भवान् ?'' इति वृद्धरक्षकं पृष्टवान् राजा ।

वृद्धः निमेषद्वयं यावत् चिन्तयित्वा - ''पाटलोद्याने एतादृशानि कण्टकानि सहजानि एव । वार्धक्यकारणतः उद्याने सम्यक् कार्यं कर्तुं न शक्नोति एषः इति अचिन्तयन् भवान् माम् उद्योगच्युतं न कुर्यात् इति च अहं चिन्तयामि'' इति उक्तवान् ।

''न । तत् एव क्रियते मया । भवतः स्थाने कञ्चित् युवकं नियोजयामि'' इति उक्त्वा अमरपतिः वृद्धस्य अश्रूणि अपि अपश्यन् ततः प्रासादं गतवान् ।

तस्मिन् दिने रात्रौ महाराज्ञी पुनः अपि



एकवारं राज्ञः पुरतः मातृगृहगमनप्रस्तावम् उपस्थापितवती ।

''मम मातुः आरोग्यं सम्यक् नास्ति इति स्वप्नः दृष्टः मया । अतः एकवारं मातरं दृष्ट्वा आगमिष्यामि'' इति उक्तवती महाराज्ञी ।

''मत्तः कीदृशम् उत्तरं लभ्येत इति चिन्तयति भवती ?'' इति पृष्टवान् राजा अमरपतिः ।

तदा महाराज्ञी हसन्ती - ''पुनः पुनः पृच्छन्ती अस्ति इति कारणतः 'गच्छतु' इत्येव भवान् वदेत् इति चिन्तयामि'' इति उक्तवती ।

''तथा नैव । भवत्या मातृगृहं न गन्तव्यम्'' इति उक्तवान् अमरपतिः ।

महाराज्ञी दीर्घं निःश्वसती चिन्तयन्ती

स्वशय्यागृहं गतवती । तस्याः चिन्ताक्रान्तमुखं दृष्ट्वा अमरपतिः - "किमेतत् आश्चर्यम् ! यत् न चिन्तितं तत् भविष्यति चेत् अपि कोऽपि सन्तोषं न अनुभवति किल ? किं करोमि चेत् एते सन्तोषम् अनुभवन्ति ?' इति पुनः चिन्तनम् आरब्धवान् । उत्तरं न प्राप्तम् इत्यतः रात्रौ निद्राम् अपि न प्राप्तवान् सः ।

अर्धरात्रे प्राप्ते अपि निद्राम् अकृत्वा शयनगृहे इतस्ततः अटनं कुर्वन्तं चिन्ताक्रान्तं पतिं दृष्ट्वा - "निद्रा न आगता किम् ? का चिन्ता बाधते भवन्तम् ?" इति पृष्टवती राज्ञी ।

स्वेन चिन्तितं पत्नीम् ऐदम्प्राथम्येन उक्तवान् अमरपतिः । प्रवृत्तं सर्वं ताम् उक्त्वा - "चिन्तितम् एव यदा सम्पन्नं तदा अपि जनाः सन्तोषं न अनुभूतवन्तः । यत् न चिन्तितं तत् यदा सम्पन्नं तदा अपि ते सन्तोषं न अनुभूतवन्तः । एवं सति किं कृतं चेत् जनानां चिन्ता परिहृता भवेत् इति चिन्तयन् अस्मि" इति उक्तवान् ।

तदा महाराज्ञी हसन्ती - "जीवने यत् भविष्यति तत् निरीक्षितं वा भवतु, अनिरीक्षितं वा भवतु, सर्वदा सन्तोषाय एव कल्पते इति नास्ति एव । राजा तु प्रजानां पितृतुल्यः । प्रजानाम् अपरिहार्याः आवश्यकताः नाम आहारः, वस्त्रं, वसतिः च । सर्वदा सर्वे तदर्थम् एव कार्यं कुर्वन्ति, चिन्तयन्ति च । यदा भवान् सर्वेभ्यः तानि दापयितुं शक्नोति तदा प्रजाः सन्तुष्टाः भविष्यन्ति । तेषां चिन्ता अदृश्यतां गता भविष्यति । जीवने तृप्तिः अपि भविष्यति" इति उक्तवती ।

तदा अमरपतिः राज्यपालनविषये आत्मना कृतान् दोषान् ज्ञातवान् । अनन्तरदिने प्रातः एव सः मन्त्रिणं, अन्यप्रमुखान् च आहूतवान् । सभायां तैः सह समालोचनं, चर्चां च कृत्वा सर्वासां प्रजानाम् अपरिहार्याः आवश्यकताः पूरिताः यथा भवेयुः तथा काञ्चित् योजनां चिन्तितवान् ।

'अनन्तरदिनेषु कदापि 'प्रजाः असन्तुष्टाः सन्ति' इति समाचारः गुप्तचरैः न आनीतः । 'राज्ये मन्त्रिस्थानं केवलम् अलङ्कारमात्राय' इति अपवादः अपि न श्रुतः ।





# राजा राजा इव

प्लवङ्गदेशस्य महाराजः कदाचित् स्नानसमये पादस्खलनेन पतितवान् । पादस्य वेदना जाता । पादं चालयितुम् अपि न शक्तवान् सः ।

भटाः धावन्तः गत्वा आस्थानवैद्यं आहूतवन्तः । आस्थानवैद्यः झटिति आगत्य मूलिकानां पेषणं कृत्वा रसेन लेपयित्वा राजानम् उक्तवान् - ''सप्ताहद्वयं यावत् पादः न चालनीयः । सम्पूर्णतया विश्रान्तिः स्वीकरणीया'' इति ।

अतः महाराजः मन्त्रिणम् आहूय उक्तवान् - ''मन्त्रिवर्य ! मम परतया राजकार्याणि भवान् एव पश्यतु । मुख्यविषये अपि भवता एव निर्णयः स्वीकरणीयः'' इति ।

सप्ताहं यावत् मन्त्री राज्यपरिपालनं कृतवान् । राज्ये यदा महाराजः पालयति स्म तदा यथा परिस्थितिः आसीत् अधुनापि तथैव परिस्थितिः अस्ति । किमपि परिवर्तनमेव न दृश्यते स्म । अनेन अहङ्कारिणः मन्त्रिणः अहङ्कारः इतोऽपि प्रवृद्धः ।

'अहं उत्तमतया राज्यपालनं कुर्वन् अस्मि । इतः पूर्वम् अपि राज्ञः मार्गदर्शनं अहमेव कृतवान् आसं खलु ? महाराजः केवलम् उत्सवमूर्तिः इव अस्ति । अतः एव राज्ञः अभावे अपि राज्यं यथापूर्वम् अस्ति' इति चिन्तयन् मन्त्री सर्वाधिकारी इव व्यवहारम् आरब्धवान् ।

एकदा नगरे कर्मकराणां षष्ट्यधिक-कुटीराः अग्निस्पर्शेन भस्मीभूताः जाताः । शताधिकाः जनाः निराश्रिताः अभवन् । एतां वार्तां श्रुत्वा मन्त्री झटिति तत् स्थलं गत्वा 'कुटीरान् पुनः निर्माय दास्यामि' इति तान् उक्तवान् । अनन्तरं सप्ताहनिमित्तं यावत् आवश्यकं तावत् आहारधान्यादिकं

अनामिका

निश्शुल्कं दापितवान् । एतावत्या व्यवस्थया अपि कर्मकरेषु सन्तृप्तिः न दृष्टा मन्त्रिणा । अतः सः कर्मकरान् पृष्टवान् - ''वदन्तु भवन्तः - इतोऽपि कीदृशं साहाय्यम् अपेक्ष्यते ?'' इति ।

''मन्त्रिवर्य ! कृपया एकवारं महाराजस्य दर्शनं कारयतु । एतस्मिन् कष्टमये काले राज्ञः सहानुभूतिः अपेक्ष्यते अस्माभिः । कष्टेभ्यः अस्मान् रक्षतः महाराजस्य दर्शनम् एकवारं करणीयम् इति अस्माकं सर्वेषां महती इच्छा अस्ति'' इति ते सर्वे मन्त्रिणं प्रार्थितवन्तः ।

एतत् श्रुत्वा मन्त्री आश्चर्यचकितः । अग्रे किं करणीयमिति चिन्तयन् आसीत् सः । तावति काले महाराजः स्वयं रथम् आरुह्य तत्र आगतवान् । कर्मकराणां म्लानानि वदनानि महाराजस्य दर्शनेन विकसितानि । ते सर्वे महाराजं भक्त्या नमस्कृतवन्तः । महाराजः परितः स्थितं स्थलम् अवलोक्य - ''भवतां सर्वेषां गृहाणि यज्ञेश्वरस्य आहुतयः अभवन् इति वार्ता इदानीमेव मया ज्ञाता । भवन्तः सर्वे कुशलिनः खलु ?'' इति विचारितवान् ।

सर्वे महाराजम् आवृत्य स्वकीयानि कष्टानि निवेद्य महाराजस्य आरोग्यविषये अपि विचारितवन्तः ।

महाराजः सर्वेषां सान्त्वनं कृत्वा - ''भवद्भ्यः नूतनतया गृहाणि निर्माय दास्यामि'' इति आश्वासनं अपि दत्त्वा ततः प्रतिगतवान् ।

एतत् सर्वं दृष्ट्वा मन्त्री गृहं गत्वा दीर्घकालं चिन्तितवान् । एवं चिन्तयता मन्त्रिणा एकः विषयः ज्ञातः यत् प्रजाः सर्वे 'महाराजः सुखेन भवेत्' इति चिन्तयन्ति, अपि च तस्य राज्यपालने सुखेन जीवितुं शक्यते इति तेषां विश्वासः । तेषां दृष्ट्या मन्त्रिणम् अपि अविहाय सर्वे राजाज्ञापालकाः सेवकाः एव । दोषः क्रियते चेत् राजा दण्डयति, आपत्काले रक्षणं च करोति इति तेषां दृढः विश्वासः अस्ति । एतेन विचारेण एव ते एकीकृताः । अतः राज्ये सुखं शान्तिः च अस्ति इति ।

एतत् सत्यं ज्ञात्वा मन्त्री ततः परं महाराजस्य आप्तः सन् अहङ्कारं त्यक्त्वा राज्यपालने उत्तमसहायकः सन् कार्यं कृतवान् ।





# सम्राट् अशोकः

## ८

*(पितुः बिन्दुसारस्य अपेक्षायाः अनुगुणम् अशोकः अवन्त्याः राजधानीम् उज्जयिनीं प्रति प्रस्थितवान् । मध्येमार्गं सायङ्कालः यदा जातः तदा विदिशादेशे पर्वतोपत्यकायां सः वसतिं कृतवान् । उषसि प्राकृतिकसौन्दर्यस्य आस्वादनार्थं गतं तं खाते पतनात् निवारितवती शाक्यनायकस्य पुत्री विदिशा । तस्यां रात्रौ उभे महिले अशोकं मारयितुं प्रयत्नं कृत्वा असफले सत्यौ बन्धनं प्राप्तवत्यौ । तदनन्तरम् .......)*

बद्धयोः नर्तक्योः पुरतः तयोः सहायकं पुरुषं बहुधा पीडितवान् यशः वस्तुस्थितेः वाचनार्थम् । ततः सः ते नर्तक्यौ उद्दिश्य उक्तवान् - ''भवत्यौ युवराजं मारयितुम् आगते । अतः भवत्योः मरणदण्डनं भविष्यति । मरणं निश्चितम् एव इत्यतः मरणात् पूर्वं सत्यकथनं वरम् । तेन नरके वा दण्डने न्यूनता भवेत्'' इति ।

नर्तक्यौ भीत्या कम्पमाने परस्परं मुखं दृष्टवत्यौ । तयोः अन्यतरा उक्तवती - ''कृपया आवयोः करुणा प्रदर्शनीया । नरकविषये आवयोः भीतिः तु नास्ति, यतः तत् कदापि न दृष्टम् एव । किन्तु भीतिः तु भवद्भिः दीयमानायाः चित्रहिंसातः । आवयोः मारणात् भवद्भिः किमपि साधितं न भविष्यति । यदि आवां सजीवे स्याव तर्हि कदाचित् वा उपकाराय स्याव । यदि सजीवत्यागस्य आश्वासनं दीयेत तर्हि आवां

वस्तुस्थितिं कथयिष्यावः'' इति ।

''आदौ वस्तुस्थितिः निवेद्यताम् । अनन्तरम् एव सजीवत्यागं मारणं वा युवराजः निर्णेष्यति'' इति उक्तवान् यशः ।

''पाटलीपुत्रात् एव वयं युवराजम् अनुसृत्य आगताः । आवां तु वृत्त्या नर्तक्यौ । धनदातारः यथा वदन्ति तथा करणम् आवयोः वृत्तिधर्मः । युवराजस्य शत्रवः अस्मान् एतस्मिन् कार्ये नियोजितवन्तः । वस्तुतः वयं तु न युवराजस्य शत्रवः'' इति उक्तवती नर्तकी ।

''धनं दत्त्वा भवत्यौ युवराजस्य मारणार्थं प्रेरितवान् सः शत्रुः कः ?'' इति पृष्टवान् यशः ।

''प्राणभिक्षादानं प्रतिज्ञातं चेदेव तत् निवेदयावः आवाम्'' इति उक्तवती एका नर्तकी ।

''विना नियमसूचनं वस्तुस्थितिः यदि न निवेद्यते तर्हि एषोऽहं भवत्यौ यमसदनं प्रेषयिष्यामि'' इति क्रोधेन उक्तवान् यशः ।

तदा भीता नर्तकी - ''राजकुमारस्य अशोकस्य मारणार्थं धनं दत्त्वा अस्मान् प्रेरितवान् न अन्यः, अपि तु चक्रवर्तिनः ज्येष्ठकुमारः सुषेणः एव'' इति उक्तवती ।

एतत् श्रुत्वा - ''किम् एतत् सत्यम् ?'' इति वदन् वासगृहात् बहिः आगतवान् अशोकः ।

''सत्यं महाप्रभो'' इति उक्त्वा ते नर्तक्यौ, सुषेणेन रहसि कृतं स्वप्रासादं प्रति निमन्त्रणं, सहस्त्ररूप्यकाणां वज्राङ्गुलीयकस्य दानं, 'कार्यं यदि यशस्वितया समाप्यते तर्हि इतोऽपि अमूल्यानि उपायनानि



दीयन्ते' इति सुषेणस्य कथनम् इत्यादिकं सर्वं यथास्थितं निवेदितवत्यौ । ताभ्यां प्रदर्शितानि वज्राङ्गुलीयकानि, उक्तानि अधिकारिणां नामानि च एतस्य साक्ष्यभूतानि आसन् । अतः अशोकः यशः च तयोः वचने विश्वासं कृतवन्तौ ।

विचारणासमाप्तेः अनन्तरम् अशोकः करताडनेन भटान् आहूतवान् । त्रयः दृढकायाः भटाः आगत्य अशोकं नमस्कृत्य विनयेन स्थितवन्तः । ''एते इतः नयन्तु । यत्र प्रेषणीये तत्र प्रेषयन्तु च'' इति आज्ञास्वरेण उक्तवान् अशोकः ।

''आवां कुत्र प्रेष्यावहे महाप्रभो !'' इति आतङ्कमिश्रितस्वरेण पृष्टवत्यौ नर्तक्यौ ।

''यत्र प्रेषणीये तत्र एव'' इति उक्तवान् अशोकः ।



''महाप्रभो ! कृपा भवतु अस्मासु । धनलोभात् यत् कृतं तदर्थं पश्चात्तापम् अनुभवामः वयम् । क्षन्तव्याः वयम्'' इति सकरुणं रुदत्यौ उक्तवत्यौ नर्तक्यौ ।

''अलं रोदनेन ! अयि दुरदृष्टशालिन्यौ नर्तक्यौ, अलं रोदनेन । शाक्यमुनिं गौतमबुद्धं शरणं गच्छताम् । तस्य अपारकरुणा युवराजम् इव भवत्यौ अपि रक्षिष्यति'' इति सुमधुरकण्ठध्वनिः पृष्ठभागात् श्रुतः ।

सर्वे आश्चर्यम् अनुभवन्तः पृष्ठतः परिवृत्य दृष्टवन्तः । विदिशा मन्दहासं प्रकटयन्ती सर्वेषां समीपम् आगतवती ।

''भगिनि ! आसाध्या आशा न उत्पादनीया भवत्या'' इति उक्तवान् यशः ।

''असाध्या आशा उत्पादिता न मया, अपि तु भवता एव । सजीवं त्यज्यते इति भवता एव खलु उक्तम् आसीत् ? किं तत् विस्मृतं भवता एतावता एव ?'' इति पृष्टवती विदिशा ।

''विवेकिनी भवती किमर्थम् एतादृशम् असम्बद्धं प्रलपति ? सजीवं त्यज्यते इति मया कदा वा उक्तम् ? अन्यच्च एतयोः त्यागे दण्डने वा मम कः वा अधिकारः ?'' इति गाम्भीर्यमिश्रितस्वरेण उक्तवान् यशः ।

''सत्यम् उच्यताम् । अन्यथा मारयिष्यामि इति खलु उक्तम् आसीत् भवता ? सत्यम् उक्तं चेत् सजीवं त्यज्यते इत्येव तात्पर्यं सिद्ध्यति खलु तस्य वचनस्य ? दत्तस्य वचनस्य अपरिपालनं विस्मरणं वा सर्वथा न शोभते'' इति उक्तवती विदिशा ।

''अहो अपूर्वा वादसरणिः !'' इति सन्तोषेण वदन् अशोकः यशम् उद्दिश्य - ''मित्र ! एतादृशीं महाबुद्धिमतीं भगिनीत्वेन प्राप्तवान् भवान् निश्चयेन सौभाग्यशाली'' इति उक्तवान् ।

यशः मूकतां गतः आसीत् । सन्तोषनिर्भरा विदिशा किङ्कर्तव्यतामूढतां गता आसीत् । विदिशायाः वचनं श्रुतवत्योः नर्तक्योः नेत्रे कृतज्ञतासूचकैः अश्रुभिः पूर्णे आस्ताम् ।

क्षणकालानन्तरं यशः प्रकृतिं प्राप्य - ''एते वञ्चिके नर्तक्यौ सजीवं त्यक्तव्यौ इति वस्तुतः अपि भवान् इच्छति वा युवराजवर्य ?'' इति आश्चर्येण पृष्टवान् ।

''विदिशया उक्तस्य प्रतिरोधः कथं वा कर्तुं शक्येत ? किन्तु एतदर्थं विदिशया अपि

यथायोग्यं शुल्कं दातव्यं भवति'' इति वदन् अशोकः मन्दहासपूर्वकं विदिशां दृष्टवान् ।

''मया यदि तत् दातुं शक्यते तर्हि ससन्तोषं ददामि । तत् किम् इति वदतु भवान्'' इति उक्तवती विदिशा ।

''तत् अवश्यं दातुं शक्यते । भवत्या एव दातव्यं तत् । तत् अपूर्वं चापि । किन्तु तत् किम् इति वक्तुं क्लेशम् अनुभवामि'' इति उक्त्वा क्षणकालानन्तरं पुनः उक्तवान् अशोकः - ''तत् भवत्याः अग्रजं यशं वदिष्यामि'' इति ।

यशः मन्दहासपूर्वकं विदिशां दृष्टवान् । विदिशा शिरः अवनमय्य ततः निर्गतवती ।

अशोकः भटान् आज्ञापितवान् यत् एते नर्तक्यौ, सः बन्दी पुरुषः च दूरे कुत्रापि त्यक्तव्याः इति ।



युवराजः अशोकः विदिशां परिणेतुम् इच्छति इत्येतां वार्तां यशमुखात् श्रुत्वा नितराम् आश्चर्यचकितौ शाक्यराजः तत्पत्नी च । तस्मिन् वचने इतोऽपि अविश्वासः तयोः । आनन्दातिशयः तौ मूकौ कृतवान् आसीत् । तदा यशः उक्तवान् - ''युवराजः अशोकः उत्तमवंशे जातः । अन्येषां राजकुमाराणाम् इव एतस्यापि राज्याकाङ्क्षा अधिकारप्राप्तीच्छा च अस्ति चेदपि एषः स्वभावेन नितरां सज्जनः । तस्य मृदुव्यवहारशालित्वं सर्वे प्रशंसन्ति । अतः मम तु भाति यत् विदिशायाः निमित्तम् एषः योग्यः वरः इति । सुसमृद्धस्य अवन्तीप्रदेशस्य राजप्रतिनिधिः सन् अधिकारं प्राप्नुवन् अस्ति एषः । एतस्य परिणयात् अस्माकं विदिशा महाराज्ञीप्राया भविष्यति'' इति ।

तदभ्यन्तरे तत्र स्थित्वा सर्वं श्रुतवती विदिशा अग्रजम् उद्दिश्य - ''मद्विषये भवता अवगतं किम् एतावत् एव ? महाराज्ञीत्वप्राप्त्या मम सन्तोषः भवेत् इति किं भवान् चिन्तयति ? किं मम महाराज्ञीत्वप्राप्तिः एव अभिलषितं भवतः ?'' इति पृष्टवती ।

क्षणकालस्य मौनस्य अनन्तरं यशः मन्दहासपूर्वकम् उक्तवान् - ''भगिनि ! को वा अग्रजः स्वस्य भगिन्याः महाराज्ञीत्व-प्राप्तिं न इच्छेत् ? भवती महाराज्ञी भवेत् इति अहं यत् अभिलषामि तत्र किं वा अनौचित्यम् ? युवराजस्य अपेक्षायाः पूरणे भवत्याः कः क्लेशः ? किमर्थम् इतोऽपि सन्दिहाना अस्ति भवती ?'' इति ।



सहजीवनं दैवेन एव निर्णीतम् इति मन्ये । अन्यथा दिनाभ्यन्तरे सा युवराजस्य प्राणरक्षणार्थं द्विवारं साहाय्यं कृतवती न स्यात् । दैवाधीनं जगत्सर्वम्'' इति ।

एतत्सर्वं श्रुतवत्याः विदिशायाः नेत्रे अश्रुपूर्णे जाते । सा विना वचनं भवनात् निर्गत्य हस्तौ मुकुलाकारेण योजयित्वा आकाशं पश्यन्ती - ''हे तथागत बुद्धदेव ! का एषा परीक्षा भवतः ! इतिकर्तव्यतामूढां मां मानसिकक्लेशात् बहिः आगमनमार्गं बोधयतु कृपया । संन्यासजीवनम् आश्रित्य भवद्दर्शितमार्गेण गत्वा निर्वाणं प्राप्तव्यम् इति मम अभिलाषः । ऐहिक-सुखोपभोगाभिलाषः अणुमात्रेण अपि नास्ति मयि । इदानीं किं करणीयम् इति अजानती अहं कष्टम् अनुभवामि । माम् उद्धरतु कृपया'' इति प्रार्थितवती ।

क्षणकालं यावत् तत्र नीरवता आसीत् । ततः विदिशा यशं पश्यन्ती उक्तवती - ''कर्तव्यं किम्, अकर्तव्यं किम् इति अहं निर्णेतुं न शक्नोमि । एतद्विषये मातापित्रोः मार्गदर्शने अपि मम नास्ति विश्वासः । सर्वे मातापितरः अपत्यस्य ऐहिकसुखम् एव इच्छन्ति इत्येषः तु लोकव्यवहारः । युवराजस्य परिणयात् अपि श्रेष्ठतरं सौभाग्यम् अन्यत् नास्ति इति भावयतः मम मातापितरौ । एतद्विषये इदानीं निष्पक्षपातेन इतिकर्तव्यताम् उपदेष्टुं समर्थः अस्ति गुरुदेवः उपगुप्तः एकः एव'' इति ।

''अस्तु नाम ! तम् एव मार्गदर्शनं प्रार्थयतु'' इति सूचितवान् यशः । मातापितरौ अपि एतं प्रस्तावम्

तदा विदिशायाः माता उक्तवती - ''युवराजः एतां परिणेतुम् इच्छति इति वार्ता वस्तुतः मयि महत् आश्चर्यम् अजनयत् । किञ्चित्कालं तस्मिन् वचने विश्वासः एव न जातः मम । मम पुत्री साधारणकन्यका इव नास्ति इति तु सत्यम् । प्रवृत्तानां सर्वेषां घटनानां परिशीलनात् ज्ञायते यत् कोऽपि दैवसङ्कल्पः एतत्सर्वं कारयन् अस्ति इति । अस्माकं वसतेः समीपे वासं कर्तुं युवराजं को वा प्रेरितवान् ? अशोकः खाते यथा न पतेत् तथा कर्तुं विदिशां को वा प्रेषितवान् ? मारणोद्यतानां वञ्चकानां ग्रहणे भवतां प्रवृत्तिः कथं वा जाता ? सर्वम् आश्चर्यवत् भासते !'' इति ।

तावत्पर्यन्तं मौनेन स्थितवान् विदिशायाः पिता तदा उक्तवान् - ''युवराज-विदिशयोः

अङ्गीकृतवन्तौ ।

विचारणात् ज्ञातं यत् उपगुप्तवर्यः अनन्तरदिने एव विदिशां प्रति आगमिष्यति इति ।

यशस्य द्वारा विदिशायाः अभिप्रायं ज्ञातवान् अशोकः ससन्तोषम् उक्तवान् यत् एकदिनं यावत् प्रतीक्षां कर्तुम् अहं सिद्धः अस्मि एव इति ।

अनन्तरदिने प्रातः विदिशा मातापितृभ्यां सहोदरेण च सह तं विहारं गतवती, यत्र च उपगुप्तवर्यः वसतिं कल्पितवान् आसीत् । यशः तस्य मातापितरौ च विहारात् बहिः एव स्थितवन्तौ । विदिशा एकाकिनी उपगुप्तं द्रष्टुम् अन्तः गतवती ।

अल्पे एव काले गम्भीरवदना सती विदिशा विहारात् बहिः आगतवती । सर्वे तां कुतूहलेन पश्यन्तः आसन् । सा मन्दहासं प्रकटयन्ती मृदुमधुरस्वरेण – "येन अस्माकं सर्वेषां समीपवर्तीना भवितव्यं, सोऽयं युवराजः किमर्थं दूरे एकाकी तिष्ठति ?" इति उक्तवती दूरे वृक्षस्य अधः स्थितम् अशोकं पश्यन्ती ।

एतत् श्रुतवतः यशस्य मूखम् आनन्दातिशयेन प्रकाशमानं जातम् । सः धावन् गत्वा अशोकं हस्तग्रहणपूर्वकं सर्वेषां समीपम् आनीतवान् ।

"युवराज ! गुरुदेवेन आज्ञाप्ता अस्मि यत् भवतः इच्छा पूरणीया इति । किन्तु मम काचित् विज्ञाप्तिः । बुद्धदेवेन बोधितं धर्ममार्गम् एव आजीवनम् अनुसर्तुम् इच्छामि अहम् । एतत् अनुज्ञातव्यं भवता" इति उक्तवती विदिशा प्रशान्तगम्भीरस्वरेण ।



"विदिशादेव्याः विज्ञप्तिः हृत्पूर्वकम् अङ्गीक्रियते मया" इति उक्तवान् अशोकः ।

"अनुगृहीता अस्मि । आवयोः विवाहः तथागतस्य परमसन्तोषाय भविष्यति इति अभिप्रैति गुरुदेवः । तस्य आदेशस्य अनुगुणं व्यवहारं कर्तुं सहर्षं सिद्धा अस्मि अहम्" इति उक्त्वा विदिशा मातापितरौ, अशोकं, सहोदरं च भक्त्या नमस्कृतवती ।

शाक्यनायकः अशोकः च 'विवाहार्थम् अनुमतिः दातव्या' इति प्रार्थनया युक्तं पत्रं विलिख्य विशेषदूतद्वारा बिन्दुसारचक्रवर्तिने प्रेषितवन्तौ । किन्तु तत् पत्रद्वयम् अपि बिन्दुसारेण न प्राप्तम् एव । सुषेणस्य आप्तः कश्चित् पत्रागमनवार्तां कथञ्चित् ज्ञात्वा धनं दत्त्वा दूतात् पत्रं प्राप्य विच्छिद्य क्षिप्तवान् । ततः अन्यः सुषेणसहायकः चक्रवर्तिनः

नाम्रि - 'एषः विवाहः मम सम्मतः सन्तोषावहः च अस्ति' इति विलिख्य प्रेषितवान् । अतः अशोकस्य विवाहवार्ता चक्रवर्तिना बिन्दुसारेण न ज्ञाता एव ।

अवन्तीप्रदेशं गतः अशोकः आदौ राजप्रतिनिधिपदम् अलङ्कृतवान् । ततः सः यथाविधि विदिशं परिणीतवान् ।

अनन्तरकाले कदाचित् सुषेणः पितुः समीपं गत्वा - ''अशोकः शाक्यराजस्य पुत्रीं परिणीतवान् इति श्रूयते । गूढचरद्वारा एषा वार्ता श्रुता मया'' इति उक्तवान् ।

''किम् एतत् ! अहं यथा न जानीयां तथा विवाहितः अभवत् वा अशोकः ! राजकुमारः सः साधारणकन्यां परिणीतवान् यत् तत् तु सर्वथा अनुचितम्'' इति वदन् नितरां खेदम् अनुभूतवान् बिन्दुसारः । 'साधारणस्त्रियाः उदरात् जातस्य व्यवहारः एतस्मात् भिन्नः भवितुं न अर्हति प्रायः' इति स्वगतम् इव उक्तवान् सः । एतत्सर्वं श्रुतवतः सुषेणस्य महान् आनन्दः जातः ।

कानिचन दिनानि अतीतानि । तक्षशिलायां पुनरपि राजविरोधः उत्पन्नः । अतः बिन्दुसारः सुषेणम् आहूय - ''उज्जयिन्यां स्थितस्य अशोकस्य आह्वानं, तक्षशिलां प्रति प्रेषणं वा सर्वथा कष्टसाध्यम् । भवान् भवत्सहोदरेषु अन्यतमः तक्षशिलां गत्वा राजविरोधं निगृह्य आगच्छतु नाम'' इति उक्तवान् ।

स्वसामर्थ्ये एव विश्वासः न आसीत् सुषेणस्य । 'न गच्छामि इति यदि वदेयं तर्हि मम असामर्थ्यं प्रकटितं भवेत्' इति भीतिः अपि आसीत् तस्य । अतः सः पितरम् उक्तवान् - ''तक्षशिलां गत्वा राजविरोधस्य निग्रहणं मम कर्तव्यम् इति अहम् अङ्गीकरोमि । पूर्वम् अशोकः यदा गतः आसीत् तदा शत्रून् निश्शेषम् उन्मूल्य यदि आगतवान् स्यात् तर्हि पुनः राजविरोधः उत्थितः न अभविष्यत्'' इति ।

''अत्र ग्रीक्जनाः हस्तक्षेपं कुर्वन्तः सन्ति इति मया श्रुतम् । मम अनारोग्यस्य वार्ता तैः ज्ञाता अस्ति । यः भूभागः तेषां वशे आसीत् स च मौर्यवंशीयेभ्यः अनन्यगतिकतया दत्तं तैः । किन्तु तद्विषयकः क्रोधः इतोऽपि प्रायः जागर्ति तेषु । एतत् एव सर्वस्य कोलाहलस्य मूलकारणम्'' इति उक्तवान् बिन्दुसारः ।

- (अनुवर्तते)





# सर्वेश्वरस्य दर्शनम्

दृढवती त्रिविक्रमः पुनरपि वृक्षस्य समीपं गत्वा वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान् । ततः यथापूर्वं मौनेन श्मशानाभिमुखं प्रस्थितवान् च । तदा शवान्तर्गतः वेतालः अवदत् - ''अये, राजन् ! भवादृशः दृढवती, कठिनपरिश्रमी च प्रपञ्चे बहु विरलः इति अहं चिन्तयामि । परन्तु तेषु अपि केचन विवेचनरहिताः, तात्कालिक-भावोद्वेगिनः च भवन्ति । ये तान् उपेक्षितवन्तः तान् एव आश्रित्य आत्मगौरवरहिततया व्यवहरन्ति ते क्वचित् । एतत् न केवलं पराक्रमिणां वीराणां च विषये, अपि तु भावनालोके विहरतां कवीनां विषये अपि अन्वितं भवति । एतस्मिन् विषये भवतः जागरणाय कलाधरकवेः कथां श्रावयामि । श्रमस्य विस्मरणार्थं तां शृण्वन् गच्छतु'' इति ।

ततः वेतालेन कथा आरब्धा -

# वेतालकथा



पुरा विजयपुरस्य राजास्थाने सर्वेश्वरः नाम कश्चित् कविपुङ्गवः आसीत् । सः सकलशास्त्रेषु अपि पारङ्गतः आसीत् । अष्टादशपुराणेषु अपि पाण्डित्यं सम्पादितवान् आसीत् सः । वेदोपनिषदां सारग्राही अपि आसीत् सः । तस्मात् तेन रच्यमानानि काव्यानि सारगर्भितानि भावगर्भितानि रसयुक्तानि च भवन्ति स्म । राजा तस्य एतान् विशेषगुणान् ज्ञात्वा तस्मै अनेकान् अधिकारान् दत्तवान् आसीत् ।

सर्वेश्वरस्य वचने राज्ञः अधिकविश्वासः इति कारणतः बहवः जनाः तस्य द्वारा बहु प्रयोजनानि प्राप्नुवन्ति स्म । अतः सामान्यजनानां एतस्य दर्शनम् अपि राजदर्शनम् इव दुर्लभम् आसीत् ।

तस्मिन् देशे एव जयपुरनामके ग्रामे कलाधरः नाम कश्चित् तरुणः आसीत् । साहित्यविषये तस्य महती अभिरुचिः आसीत् । बाल्यात् एव बहूनां महाकवीनां काव्यानि पठितवान् आसीत् सः । एवं पठनसमये स्फूर्त्या श्लोकान् अपि रचयति स्म सः । ज्येष्ठानां पुरतः पठति स्म अपि । एकदा तस्य ग्रामम् आगतः कश्चित् महाकविः तस्य कवितां श्रुत्वा - ''वत्स ! भवान् आजन्मकविः अस्ति । सम्यक् अभ्यासं करोतु । ततः भवान् विश्वविख्यातः भविष्यति'' इति आशीर्वादं कृत्वा गतवान् ।

तदारभ्य कलाधरः इतोऽप्यधिकश्रद्धया अभ्यासं कर्तुम् उद्युक्तः अभवत् । आरम्भदिनेषु यः लघून् श्लोकान् लिखन् आसीत् सः एव विंशतितमे वयसि एव त्रीन् महाग्रन्थान् रचितवान् । तान् श्रुत्वा श्रोतारः सर्वेऽपि आनन्दतुन्दिलाः भवन्ति स्म । तेषु केचन - ''भवान् साक्षात् सरस्वतीपुत्रः एव । एकदा भवान् विजयपुरस्य सर्वेश्वराय भवतः काव्यानि दर्शयतु । तदा भवतः पाण्डित्यं जनैः अभिज्ञातं भविष्यति'' इति सूचितवन्तः ।

एतत् अङ्गीकुर्वन् कलाधरः कदाचित् स्वकाव्यानि स्वीकृत्य विजयपुरं गतवान् । सर्वेश्वरस्य दर्शनार्थं यदा सः तस्य गृहं गतवान् तदा गृहरक्षकः एतम् उद्दिश्य - ''भवता यत् वक्तव्यम् अस्ति तत् मां वदतु । अहं तत् सर्वेश्वरवर्यं वदामि'' इति उक्तवान् ।

कलाधरः कागदस्य उपरि स्वरचित-काव्येषु चितानि कानिचन पद्यानि लिखित्वा रक्षकस्य हस्ते दत्त्वा - ''एतेषां विषये

सर्वेश्वरवर्यस्य अभिप्रायं ज्ञातुम् इच्छामि'' इति उक्तवान् ।

रक्षकः एतेन दत्तं कागदं स्वीकृत्य आश्चर्येण कलाधरं दृष्ट्वा - ''एतावदेव वा ? अन्यत् किमपि न आवश्यकं वा ? सर्वेश्वरवर्यः मृदुहृदयी उदारः च अस्ति । भवान् यत् साहाय्यम् इच्छति तत् करोति सः'' इति उक्तवान् ।

तदा कलाधरः उक्तवान् - ''अन्यविधस्य साहाय्यस्य आवश्यकता नास्ति मम'' इति ।

रक्षकः अन्तः गत्वा कलाधरस्य विषयं सर्वेश्वरम् उक्तवान् । तदा सर्वेश्वरं परितः बहवः जनाः आसन् । अतः सः रक्षकेण आनीतानि पत्राणि शिष्याय दत्त्वा - ''एतानि पठित्वा भवतः अभिप्रायं लिखतु । अहं हस्ताङ्कनं करिष्यामि'' इति उक्तवान् ।



शिष्यः पद्यानि श्रद्धया पठित्वा - ''गुरुदेव ! एतानि पद्यानि असाधारणानि सन्ति । तं कविं भवतः दर्शनार्थम् अन्तः आह्वयामि किम् ?'' इति पृष्टवान् ।

''इदानीम् एव अन्तः बहुजनाः सन्ति । सः कविः केवलं मम अभिप्रायं पृष्टवान् अस्ति । यत् सः पृष्टवान् तत् दत्त्वा प्रेषयाम'' इति उक्तवान् सर्वेश्वरः ।

शिष्यः स्वस्य अभिप्रायम् एकस्मिन् पत्रे लिखित्वा सर्वेश्वराय दत्तवान् । सर्वेश्वरः तस्मिन् हस्ताङ्कनं कृत्वा रक्षकाय दत्तवान् । रक्षकः तत् आनीय कलाधराय दत्तवान् । आह्वानं न लब्धम् इति खिन्नः कलाधरः ततः प्रतिगतवान् ।

एवमेव केचन मासाः अतीताः । सर्वेश्वरः राज्ञः कार्यार्थं देशसञ्चारम् आरब्धवान् । एकदा सः जयपुरं गतवान् । तस्य आगमनं साधारणविषयः न आसीत् । गजे उपविश्य परिवारजनैः सह वैभवेन आगतवान् सर्वेश्वरः । तेषां सर्वेषां कृते अपि तस्य ग्रामस्य प्रमुखः वैभवपूर्णां वसतिव्यवस्थां कृतवान् आसीत् ।

सर्वेश्वरः तस्मिन् ग्रामे दिनद्वयं यावत् स्थितवान् । प्रथमदिने ग्रामस्य बहु जनाः एकैकशः आगत्य स्वसमस्याः निवेदितवन्तः । ग्रामप्रमुखः सर्वेश्वरम् उद्दिश्य - ''स्वामिन् ! अस्माकं ग्रामजनानां समस्याः सर्वाः भवान् ज्ञातवान् खलु ? एतासां समस्यानां परिहारार्थं योग्या आर्थिकव्यवस्था भवता करणीया'' इति निवेदितवान् ।

''मम वचनविषये राज्ञः बहु गौरवम्



अस्ति । निश्चयेन अहं प्रयत्नं करिष्यामि । श्वः भवतः ग्रामदर्शनार्थं व्यवस्थां करोतु तावत्'' इति उक्तवान् सर्वेश्वरः ।

अनन्तरदिने ग्रामं द्रष्टुं प्रस्थितवान् सर्वेश्वरः । ग्रामस्थाः तस्य दर्शनार्थं गणशः आगतवन्तः । तेषां निग्रहणम् एव कष्टाय जातम् । ये तस्य दर्शनम् इष्टवन्तः ते सर्वे तदीयं दर्शनं प्राप्तुं न शक्तवन्तः । मध्याह्नात् पूर्वं ग्रामे दर्शनकार्यक्रमः समाप्तः ।

मध्याह्ने भोजनानन्तरं विश्रान्तिसमये सर्वेश्वरः ग्रामप्रमुखम् उद्दिश्य - ''भवतः ग्रामे कवयः सन्ति चेत् वदतु । तेषां यथाशक्ति साहाय्यं कर्तुम् इच्छामि'' इति उक्तवान् ।

''स्वामिन् ! अस्माकं ग्रामे द्वित्राः कवयः सन्ति । सामान्यतः शताधिकाः साहित्यासक्ताः सन्ति । ते सर्वेऽपि भवता सह सम्भाषणं कर्तुम् आसक्ताः सन्ति । तदर्थम् एकां चर्चागोष्ठीम् आयोजयाम वा ?'' इति उत्साहेन पृष्टवान् ग्रामप्रमुखः ।

''चर्चागोष्ठी आयोजिता चेत् तत्र केचन एव जनाः भागं स्वीकर्तुं शक्नुवन्ति । बहु जनाः मां द्रष्टुम् इच्छन्ति खलु । तर्हि एकां सभाम् एव आयोजयतु । अहं प्रवचनं करोमि । 'समस्याः सन्ति चेत् स्वस्य नाम समस्यां च कागदे लिखित्वा यच्छन्तु' इति भवान् सभायां सूचयतु । तदा तेषां पृथक् परिशीलनं कर्तुं शक्यते'' इति उक्तवान् सर्वेश्वरः ।

एषा वार्ता उद्घोषणद्वारा ग्रामे सर्वत्र प्रसारिता । सभां प्रति जनाः गणशः समागतवन्तः । सर्वेश्वरः बहु उत्तमं भाषणं दत्तवान् । जनाः करताडनद्वारा सन्तोषं प्रदर्शितवन्तः ।

सभायाः अनन्तरं द्वित्राः कवयः, केचन साहित्याभिमानिनः च सर्वेश्वरेण सह वैयक्तिकरूपेण सम्भाषणं कृतवन्तः । तेषां साहाय्यार्थं 'ग्रामे ग्रन्थालयनिर्माणं करिष्यामि' इति वचनं दत्तवान् सर्वेश्वरः ।

तथा आगतेषु कलाधरः न आसीत् इति विषयः ग्रामप्रमुखेण अवलोकितः । सर्वेश्वरेण मेलितुं प्रयत्नः अपि तेन न कृतः इति ज्ञातं तेन प्रमुखेण । कलाधरस्य, तस्य कवितायाः च विषये ग्रामप्रमुखस्य विशेष-प्रीतिः आसीत् । एकदा एतौ द्वौ मिलतः चेत् वरम् इति उद्देशेन कलाधरम् आह्वातुं कश्चित् जनं प्रेषितवान् ग्रामप्रमुखः । परन्तु कलाधरः 'मम समयः नास्ति' इति उक्त्वा

तं प्रतिप्रेषितवान् । सर्वेश्वरः विजयपुरं प्रत्यागतवान् ।

कानिचन दिनानि अतीतानि । गच्छता कालेन सर्वेश्वरस्य मनसि काऽपि असन्तृप्तिः उद्भूता । ऐहिकसुखादिकं तस्य सन्तोषाय न अभवत् । अन्ते सः आस्थानपदवीं परित्यज्य स्वसम्पत्तिं सर्वां पुत्रेभ्यः दत्त्वा वने एकम् आश्रमं निर्माय पत्न्या सह वानप्रस्थजीवनम् आरब्धवान् ।

एषः विषयः कलाधरेण ज्ञातः । अनन्तरदिने एव सः स्वकाव्यानि स्वीकृत्य सर्वेश्वरं द्रष्टुं प्रस्थितः । अरण्ये गमनं बहु कष्टकरम् आसीत् । तथापि तानि कष्टानि सोढ्वा सर्वेश्वरेण मिलितवान् कलाधरः ।

तदा आश्रमे सर्वेश्वरः तस्य पत्नी च आस्ताम् । तयोः सेवार्थम् एकः परिचारकः एका परिचारिका च आसीत् । तस्मिन् समये तौ द्वौ समीपस्थं सरोवरं गतवन्तौ आस्ताम् ।

कलाधरः यस्मिन् समये आश्रमं प्रविष्टवान् तस्मिन् समये सर्वेश्वरः पत्नीं भागवतपुराणं कथयन् आसीत् । सा अपि अत्यन्तं भक्त्या नेत्रे निमील्य शृण्वती ''भवतः मुखात् एतस्य पुराणस्य श्रवणभाग्यं मया प्राप्तं यत् तत् मम पूर्वजन्मनः पुण्यस्य फलम्'' इति उक्तवती ।

''न केवलं मम मुखात्, अपि तु यस्य कस्यचित् अपि मुखात् एतत् श्रुतं चेत् अपि दिव्यानुभवः एव प्राप्यते । यदा अहम् एतादृशं काव्यं रचयिष्यामि तदा एव अहं वास्तविकः कविः भविष्यामि'' इति उक्तवान् सर्वेश्वरः ।

''भवतः वचनं न निराकुर्वन् अस्मि अहम् । परन्तु भवान् इदानीम् एव महाकाव्यसमं काव्यं रचितवान् अस्ति इति मम अभिप्रायः'' इति अनुक्षणम् उक्तवान्





तत्र उपस्थितः कलाधरः ।

तदा सर्वेश्वरः कलाधरं दृष्ट्वा तस्य पूर्वोत्तरं विचार्य - ''आत्मना लिखितेषु काव्येषु कानिचन पद्यानि पठतु'' इति उक्तवान् । कलाधरः कांश्चन श्लोकान् पठितवान् ।

कलाधरस्य पद्यानि श्रद्धया श्रुत्वा - ''भवान् वस्तुतः सरस्वत्याः पुत्रः एव । परन्तु भवतः पद्येषु कुत्रचित् अल्पाः व्याकरणदोषाः दृश्यन्ते । तेषां निवारणम् अपि सुकरम् एव अस्ति । तान् दोषान् यदि भवान् न निवारयति तर्हि भवतः काव्यं दूषितं भावयेयुः पण्डिताः'' इति उक्तवान् ।

''स्वामिन् ! एतानि पद्यानि भवता पूर्वम् एव पठितानि आसन् । तदा एव भवान् अत्रत्यान् व्याकरणदोषान् किमर्थं न दर्शितवान् ?'' इति पृष्टवान् कलाधरः ।

''मया एतानि कुत्र पठितानि ?'' इति आश्चर्येण पृष्टवान् सर्वेश्वरः ।

तदा कलाधरः प्रवृत्तं सर्वं निवेदितवान् । सर्वं श्रुत्वा सर्वेश्वरः - ''भोः ! तस्मिन् दिने भवतः पद्यानि मम शिष्यः पठितवान् । मया तानि न पठितानि एव । तस्मिन् दिने भवान् मम अभिप्रायं प्रार्थितवान् । भवान् मां द्रष्टुम् एव यदि इष्टवान् स्यात् तर्हि सम्यक् अभविष्यत् । आवां द्वौ परस्परं सम्भाषितवन्तौ स्याव'' इति उक्तवान् ।

एतत् श्रुत्वा कलाधरः हसन् - ''कविता एव वस्तुतः मम परिचयं कारयेत् इति चिन्तितम् आसीत् मया । तानि पठित्वा निश्चयेन भवान् माम् आह्वयति इति मम निर्णयः आसीत् । तस्मिन् दिने 'सम्यक् अस्ति' इति अभिप्रायं भवान् प्रकटितवान् । अद्य मम दोषान् दर्शितवान् अस्ति । तस्य दिनस्य अभिप्रायश्रवणात् यावान् सन्तोषः जातः ततोऽपि अधिकः सन्तोषः जातः अस्ति अद्य । कृपया कानिचन दिनानि भवतोः सेवां कर्तुम् अवकाशं ददातु । एषा एव मम प्रार्थना'' इति उक्तवान् ।

वेतालः कथां श्रावयित्वा - ''राजन् ! बहुभिः महाकविभिः पण्डितैः च श्लाघितः अस्ति कलाधरः । परन्तु तस्य व्यवहारः तु आश्चर्यकरः, अर्थरहितः, आत्मगौरव-विरुद्धः च भासते खलु ? सर्वेश्वरः यदा देशपर्यटनार्थम् आगतवान् आसीत् तदा ग्रामप्रमुखेण आहूतः अपि कलाधरः तम् अवकाशं निराकृतवान् । तादृशः कलाधरः यदा ज्ञातवान् यत् 'सर्वेश्वरः वने

वानप्रस्थजीवनं कुर्वन् अस्ति' इति, तदा महता कष्टेन अरण्यगमनस्य कष्टानि अपरिगणयन् तं द्रष्टुं गतवान् इत्येतत् किं न चित्रम् ? अपि च सर्वेश्वरस्य सेवां कर्तुम् अवकाशम् अपि प्रार्थितवान् सः । एतत् सर्वम् अवलोकयामः चेत् न भासते किम् सः मूर्खः इति ? एतेषां सन्देहानां परिहारः यदि जानन् अपि भवान् न वदति तर्हि भवतः शिरः सहस्रधा भग्नं भविष्यति'' इति उक्तवान् ।

तदा त्रिविक्रमः - ''कलाधरः यदा सर्वेश्वरं द्रष्टुं विजयपुरं गतवान् तदा सः चिन्तितवान् आसीत् यत् कविताः पठित्वा सर्वेश्वरः निश्चयेन सन्दर्शनं ददाति इति । परन्तु सर्वेश्वरः सन्दर्शनम् अदत्त्वा केवलम् अभिप्रायं सूचितवान् इत्यतः ज्ञातं यत् 'कविताविषये सर्वेश्वरस्य आसक्तिः न्यूना जाता अस्ति' इति । 'केवलं प्रभावकारणतः सर्वेश्वरः जनानां साहाय्यं कुर्वन् अस्ति' इति कलाधरः चिन्तितवान् । कवित्वविषयं विहाय अन्यत् किमपि सर्वेश्वरतः आवश्यकं न आसीत् कलाधरस्य । अतः एव सर्वेश्वरः यदा स्वग्रामम् आगतवान् तदा अपि तं द्रष्टुं न गतवान् कलाधरः । तेन सर्वेश्वरेण सह साहित्यचर्चां केवलां कर्तुम् इष्टवान् आसीत् कलाधरः, न तु तस्य दर्शनम् । परन्तु यदा - 'सर्वेश्वरः राजसभां परित्यज्य आश्रमवासी जातः अस्ति' इति ज्ञातवान् तदा एव कलाधरेण चिन्तितं यत् तस्य दर्शनेन लाभः भविष्यति इति । अतः एव सः सर्वाणि कष्टानि सोढ्वा तस्य आश्रमं गतवान् । अनन्तरं प्रवृत्ते सम्भाषणे सर्वेश्वरः उक्तवान् यत् यदा विजयनगरं भवान् आगतः आसीत् तदा भवतः पद्यानां विषये उक्तः अभिप्रायः न मम आसीत्, अपि तु मम शिष्यस्य आसीत् इति । अपि च सः कलाधरस्य काव्यस्य व्याकरणदोषान् अपि दर्शितवान् । एतेन सर्वेश्वरः कीदृशः महनीयः अस्ति इति कलाधरेण ज्ञातम् । अतः एव सः तस्य सेवां कर्तुम् अवकाशं प्रार्थितवान् । एतेन परिशीलनेन ज्ञायते यत् कलाधरः विवेचनरहितः वा आत्मगौरवहीनः वा न इति'' इति उक्तवान् ।

एवं वदतः राज्ञः मौनभङ्गः यदा जातः तदा वेतालः ततः अदृश्यः भूत्वा पुनः वृक्षारोहणं कृतवान् ।



# साम्बशिवस्य चित्रम्

विजयनगरे प्रतिसंवत्सरं चित्रप्रदर्शनं प्रचलति स्म । तत्र न केवलं प्रसिद्धकलाविदां चित्राणि, अपि तु अप्रसिद्धकलाविदां चित्राणि अपि प्रदर्श्यन्ते स्म ।

रूढ्यनुसारम् एतस्मिन् वर्षे अपि विजयनगरे चित्रप्रदर्शनकार्यक्रमः सम्पन्नः आसीत् । देशस्य विविधप्रान्तेभ्यः आगतानां प्रसिद्धचित्रकलाविदां, नूतनतया अभ्यासं कुर्वतां चापि चित्रप्रदर्शनम् अपि आयोजितम् आसीत् । एतैः चित्रैः प्रदर्शनशाला शोभते स्म ।

सुरपुरतः आगतः साम्बशिवः नाम चित्रकलावित् स्वेन लिखितानि चित्राणि प्रदर्शनार्थम् आनीतवान् आसीत् । तस्य चित्राणि अपि प्रदर्शनशालायां प्रदर्शितानि आसन् ।

एकदा साम्बशिवस्य वसतिं नागराजनामकः विजयनगरस्य नागरिकः आगतः । सम्भाषणसमये एषः एव साम्बशिवः इति ज्ञातवान् सः उक्तवान् - ''अद्य अहं प्रदर्शनशालां गतवान् आसम् । तत्र भवता लिखितानां चित्राणां पुरतः घण्टां यावत् स्थितवान् आसम्'' इति ।

एतत् श्रुत्वा अत्यन्तं सन्तुष्टः साम्बशिवः पृष्टवान् - ''मम चित्रं भवतः इष्टाय अभवत् इति अहं बहु सन्तुष्टः अस्मि । मम चित्राणि तथा सुन्दराणि सन्ति किम् ?'' इति ।

''तत् अहं न जाने । अन्येषां सर्वेषां चित्राणां पुरतः महान् जनसम्मर्दः आसीत् । अतः भवतः चित्राणां पुरतः एव मया घण्टां यावत् स्थातव्यम् आपतितम्'' इति उक्तवान् ।

एतद् श्रुतवतः साम्बशिवस्य मुखं म्लानं जातम् ।



# ओरिस्सातीरम्

रचना - मीरानायर्  चित्राणि - गोपकुमारः




ओरिस्साराज्ये समुद्रतीरस्य आरम्भः यत्र भवति ततः किञ्चित् अन्तः गमनेन वेमनिर्मितशाटिकानां निमित्तं प्रसिद्धः लघुग्रामः 'बोमुकोय्' प्राप्यते । वयनं परम्परया आगतः ओरिस्साराज्यस्य गृहोद्यमः अस्ति । यद्यपि समग्रे राज्ये बहूनां कुटुम्बानां वयनम् एव जीविका अस्ति अधुनापि, तथापि बोमुकोय्ग्रामे सज्जीक्रियमाणायाः शाटिकायाः स्वकीयम् एव किञ्चित् वैशिष्ट्यम् अस्ति । तत्र सज्जीक्रियमाणा एकैका अपि शाटिका अन्यस्याः भिद्यते । एकस्याः इव अन्यस्याः रचना न भवति । किञ्चित् वा भेदः भवत्येव ।

ततः किञ्चिद्दूरे उत्तरे भागे, समग्रे देशे अतिमहत् इति प्रसिद्धं 'चिल्का' सरोवरम् अस्ति । एतत् सरोवरं बंगालसागरेण संयोजयति काचित् लघु कुल्या । एतत् सरोवरं सामान्यतः ११०० च.कि.मी. विशालम् अस्ति । ग्रीष्मकाले अस्य जलं लवणमयं भवति । वर्षाकाले दयाभार्गवीनद्योः जलम् एतत् सरोवरं प्रति आगच्छति । तेन लवणजलं सर्वं समुद्रं प्राप्नोति, सरोवरे मधुरजलं भवति । अतः एव एतत् देशे एव अतिमहत् मधुरजलसरोवरम् इति प्रसिद्धिं गतम् अस्ति ।

अस्मिन् सरोवरे तत्र तत्र लघु लघु मौक्तिकद्वीपानि सन्ति । एकस्मिन् द्वीपे सरोवरदेवतायाः काल्याः मन्दिरम् अस्ति । एषु द्वीपेषु जलपक्षिणः बहवः सन्ति । शैत्यकाले कदम्बानां, बकानां, नारायण-पक्षिणां च जले सञ्चारः नयनमनोहरः भवति ।

अस्मिन् सरोवरे मीनग्रहणार्थं याः नौकाः उपयुज्यन्ते तासु कटेन निर्मितं चतुरस्राकारकं वातवसनम् उपयुज्यते ।



चिल्कासरोवरम्

ततः इतोऽपि अग्रे गमनेन वयं पुरातनं पुरीपत्तनं प्राप्स्यामः । इदं नगरं "पालौरा" इति नाम्ना अपि प्रसिद्धम् आसीत् ।

कदाचित् पुरीनौकास्थानद्वारा इण्डोनेषियाद्वीपैः सह महता प्रमाणेन वाणिज्यं प्रचलति स्म ।

अधुना देशे एव अत्यन्तदीर्घसमुद्रतीरयुक्तं नौकास्थानम् अस्ति एतत् । हिन्दूनां पवित्रेषु चतुर्धामसु अन्यतमा पुरीनगरी । बदरी, द्वारका, रामेश्वरं च अन्यानि स्थानानि ।

पुरीनगरे उन्नते स्थाने रमणीयः नयनमनोहरः जगन्नाथदेवालयः निर्मितः अस्ति । १२ शतके बोडगङ्गराजः स्वराजधानीं दक्षिण-ओरिस्सातः मध्य-ओरिस्सां प्रति आनीतवान् । एतस्य स्मरणार्थं सः तं देवालयं निर्मापितवान् । अनुजया सुभद्रया, अग्रजेन बलरामेण च सह स्थितः श्रीकृष्णः अत्र जगन्नाथनाम्ना सम्पूज्यते । देवालयस्य गर्भगृहे विद्यमानाः मूर्तयः अपूर्णाः इव दृश्यन्ते ।

कदाचित् इन्द्रद्युम्नः नाम राजा अस्मिन् देवालये विद्यमानम् इन्द्रनीलमणियुतं विष्णुविग्रहं स्वायत्तीकर्तुं सङ्कल्प्य रहसि देवालयस्य गर्भगृहं प्रविष्टवान् । तदा विष्णुविग्रहः अदृश्यः अभवत् । स्वस्य पापकार्यविषये पश्चात्तापम् अनुभवन् सः राजा घोरं तपः आचरितवान् । ध्यानसमये 'देवस्य विग्रहः स्थूलकाष्ठरूपेण समुद्रे गोचरीभविष्यति' इति अशरीरवाणी तेन श्रुता । तदनुसारं यदा राजा समुद्रतीरं गतवान् तदा सः तत्र जले प्लवमानं स्थूलकाष्ठखण्डम् एकं दृष्टवान् । सैनिकानां द्वारा सः तत् तीरम् आनायितवान् । तेन विष्णोः विग्रहः निर्मातव्यः इति सः शिल्पिनः सूचितवान् । परं कोऽपि तस्मिन् कार्ये यशस्वी न अभवत् । तक्षणस्य आरम्भे एव सर्वस्यापि वृक्षभेदी भग्नः भवति स्म, अथवा हस्ते व्रणः वा भवति स्म ।

अन्ते देवः एव वृद्धशिल्पिरूपेण राज्ञः समीपम् आगत्य - "एकविंशतिदिनानां समयावकाशः दीयते चेत् अहं विग्रहस्य निर्माणं करिष्यामि । किन्तु मम तक्षणसमये केनापि न द्रष्टव्यम्" इति

**रथयात्रा**



उक्तवान् । राजा ''तथैव भवतु'' इति उक्त्वा तदर्थं विशेषभवनं व्यवस्थापितवान् । कानिचन दिनानि अतीतानि । 'देवस्य विग्रहः कथम् अस्ति इति द्रष्टव्यम् इति राज्ञः महती इच्छा उत्पन्ना । अतः सः पिहितद्वारस्य मध्ये विद्यमानात् रन्ध्रात् 'शिल्पी कथं तक्षन् अस्ति' इति दृष्टवान् । अनुक्षणं वृद्धशिल्पी अदृश्यः अभवत् । पुनः कुत्रापि सः न दृष्टः । अनन्यगतिकः राजा अपूर्णान् तान् त्रीन् विग्रहान् आनीय देवालये प्रतिष्ठापितवान् । एषा तस्य देवालयस्य कथा ।

द्वादशवर्षेषु एकवारं एते विग्रहाः परिवर्त्यन्ते । एतेषां विग्रहाणां निर्माणार्थं श्रेष्ठानां स्थूलकाष्ठानां सङ्ग्रहणं प्रधानं कार्यं मन्यन्ते सर्वे । अर्चकेन स्वप्ने दृष्टस्य निम्बवृक्षस्य काष्ठम् आनीय एतत् विग्रहं निर्मान्ति ।

विग्रहस्य सज्जीकरणस्य अनन्तरं देवालयस्य अर्चकः नेत्रयोः पट्टिकां बद्ध्वा प्राचीनविग्रहे निहितं किञ्चित् वस्तु (बुद्धस्य पवित्रः दन्तः इति केषाञ्चित् पण्डितानाम् अभिप्रायः) निष्कास्य नूतनविग्रहे गूहयति । तत् वस्तु किम् इति केनापि न ज्ञातव्यम् इति कारणेन अर्चकस्य हस्तम् अपि वस्त्रेण आच्छादयन्ति । प्रतिवर्षं जुलैमासे रथोत्सवात् पूर्वं प्रवर्तमानस्य ''नवकलेवर''नामकस्य उत्सवस्य समये एषः कार्यक्रमः प्रचलति ।

गोकुलतः मथुरां प्रति श्रीकृष्णस्य प्रयाणस्य स्मरणार्थं अत्रस्था सुप्रसिद्धा रथयात्रा प्रचलति। एतान् त्रीन् विग्रहान् अपि महत्सु त्रिषु रथेषु संस्थाप्य शोभायात्रया जगन्नाथ-उद्यानभवनं (गुण्डीचबारी) प्रति नयन्ति । षोडशचक्रैः युक्तः१४ मी. उन्नतः, ११ मी. विशालः ''नन्दीघोष''नामकः रथः एव त्रिषु रथेषु उन्नततमः ।

रथस्य परिक्रमणस्य दूरं यद्यपि एकमैलिपरिमितम् एव, तथापि ''गुण्डीचबारी'' प्राप्तुम् एकदिनस्य समयः आवश्यकः भवति । रथोत्सवं द्रष्टुं रथम् आक्रष्टुं च लक्षाधिकाः जनाः



सम्मिलन्ति । तस्मिन् पवित्रे दिने जगन्नाथविग्रहस्य स्पर्शेन पुनर्जन्म न भवति इति बहूनां विश्वासः । अतः सर्वे भक्ताः अपि तं विग्रहं स्प्रष्टुम् उत्सुकाः भवन्ति तस्मिन् दिने ।

अष्टदिनानाम् अनन्तरं विग्रहान् पुनश्च प्रधानदेवालयं प्रति पूर्ववत् वैभवेन एव प्रत्यानयन्ति ।

अस्य प्रदेशस्य 'ओडिस्सि'नामकस्य शास्त्रीयनृत्यस्य, अस्य देवालयस्य आगमविधीनां च परस्परं सम्बन्धः अस्ति । पादं परितः प्रसरन्तीः सुन्दरीः शाटिकाः धृत्वा, श्वेतानि आभरणानि, पुष्पाणि च धृत्वा नृत्यन्तः एव ओडिस्सिनर्तकाः पुरीजगन्नाथमन्दिरे त्रीन् विग्रहान् अपि प्रार्थनापुरस्सरं प्रणम्य पश्चात् एव नाट्यप्रदर्शनम् आरभन्ते । ओडिस्सिनृत्यकाले केवलं भक्तिगीतानि एव गीयन्ते । जयदेवस्य अष्टपद्यः अपि राधाकृष्णयोः निष्कलङ्कं प्रेम वर्णयन्ति ।

पुरीतः १६ कि.मी. दूरे शास्त्रीयकलाविदां वासस्थानं रघुराजपूर्नामकः ग्रामः अस्ति । तत्र वस्त्रस्य उपरि चित्राणि (पटचित्रं) रचयन्ति ।

ततः अग्रे दशकिलोमीटर्दूरे श्रीकृष्णमन्दिरम् अस्ति । तस्मिन् विद्यालये विद्यमानः मनुष्यप्रमाणकः विग्रहः बहु सुन्दरः अस्ति । द्वयोः ब्राह्मणयोः मध्ये परस्परम् अभिप्रायभेदं निवारयितुं बालकृष्णः साक्षिरूपेण तत्र आगतः इति स्थलस्य विषये काचित् कथा प्रसिद्धा अस्ति । अतः एव तस्य देवालयस्य नाम ''साक्षिगोपालमन्दिरम्'' इत्येव प्रसिद्धम् अस्ति ।



**ओडिस्सि नृत्यकलावित्**



# सर्पविषनिवारकः मन्त्रः

सुधामपुरग्रामे सञ्जयः नाम कश्चित् सामान्यः कृषिकः आसीत् । सः स्वस्य अल्पे अपि क्षेत्रे श्रमेण कृषिं कुर्वन् जीवनं करोति स्म । कृषितः यः आयः भवति ततः तदीयं कुटुम्बजीवनं निर्बाधं प्रचलति स्म । तथापि तस्य जीवने असन्तोषः एव अधिकः आसीत् । सर्पविषनिवारकः मन्त्रः ज्ञातव्यः इति तस्य महती इच्छा आसीत् । बहुत्र अन्वेषणेन अपि तादृशमन्त्रस्य उपदेष्टा कोऽपि न लब्धः तेन ।

कदाचित् सञ्जयः बन्धुगृहं गतवान् आसीत् । तत्रापि सः बान्धवान् उद्दिश्य - ''सर्पविषनिवारकमन्त्रः ज्ञातव्यः इति मम महती इच्छा अस्ति । भवतां ग्रामे तादृशः सर्पविषनिवारकमन्त्रज्ञः कोऽपि अस्ति वा ?'' इति विचारितवान् ।

तदा कश्चित् बन्धुः उक्तवान् - ''मम ज्ञानानुसारम् अस्माकं ग्रामे, परितः विद्यमानेषु अन्येषु ग्रामेषु वा तादृशः मन्त्रज्ञः कोऽपि नास्ति । तादृशं मन्त्रं संन्यासिनः, परिव्राजकाः वा जानन्ति । अतः भवान् संन्यासिनं परिव्राजकं वा यदि शरणं गच्छेत् तर्हि सर्पविषनिवारकमन्त्रं ज्ञातुं शक्नुयात्'' इति उक्तवान् ।

तदारभ्य सञ्जयः संन्यासिनां, परिव्राजकानां च अन्वेषणम् आरब्धवान् । सञ्जयः कदाचित् स्वक्षेत्रे जूर्णं वर्धितवान् आसीत् । प्रवृद्धस्य जूर्णस्य फलभरितानि कणिशानि नयनानन्दकराणि आसन् । दिने पक्षिभ्यः रात्रौ पशुभ्यः च फलं रक्षितुं सः क्षेत्रे एव वितानं निर्माय तत्रैव अहर्निशं वसन् रक्षणं कुर्वन् आसीत् ।

एकस्मिन् दिने सायङ्काले स्वक्षेत्रस्य समीपे गच्छन्तं कञ्चित् परिव्राजकानां समूहं दृष्टवान् सञ्जयः । 'मम इच्छायाः पूरणस्य समयः सन्निहितः' इति चिन्तयन् सञ्जयः



सन्तोषेण तेषां समीपं गत्वा तेषाम् मध्ये विद्यमानम् उन्नतं, दीर्घश्मश्रुलम्, आजानुबाहुं कञ्चित् परिव्राजकं नमस्कृत्य - ''श्रीमन् ! कृपया भवान् मां सर्पविषनिवारकमन्त्रं बोधयतु'' इति प्रार्थितवान् ।

परिव्राजकः सकृत् सञ्जयं नखशिखान्तं दृष्ट्वा - ''भोः, सूर्योदयसमये मध्याह्नसमये वा पाठ्यन्ते चेत् एव मन्त्राः सिध्यन्ति । अधुना तु अन्धकारः प्रसरन् अस्ति । एषः युक्तः समयः न । अद्य रात्रौ भवतः क्षेत्रे उषितुम् अवकाशः दीयते चेत् श्वः प्रातः अहं भवन्तं मन्त्रं बोधयिष्यामि'' इति उक्तवान् ।

सञ्जयः सन्तोषेण एतत् अङ्गीकृतवान् । ''भवन्तः सर्वे अद्य मम क्षेत्रे एव वासं कुर्वन्तु'' इति तान् सर्वान् विनयेन निवेदितवान् च ।

ते कानिचन तत्त्वपदानि गायन्तः यथेष्टं जूर्णकणिशानि खादित्वा अवशिष्टं सर्वं तत्रैव विकीर्य निश्चिन्ततया निद्रां कृतवन्तः । यद्यपि बहु जूर्णः नष्टः तथापि प्राप्स्यमाणं मन्त्रस्य अध्ययनस्य अवकाशं स्मरन् सञ्जयः हानिं न गणितवान् एवं । प्रत्युत महान्तं सन्तोषम् एव प्राप्तवान् सः । रात्रौ निद्रा अपि न प्राप्ता तेन ।

प्रभाते सर्वे परिव्राजकाः उत्थाय त्वरया ततः प्रस्थितवन्तः एव । तत् दृष्ट्वा सञ्जयः तेषां पृष्ठतः धावन् तं दीर्घश्मश्रुलं परिव्राजकम् उद्दिश्य - ''श्रीमन्, सर्पविष-निवारकः मन्त्रः भवता न बोधितः'' इति उच्चैः उक्तवान् ।

तदा सः परिव्राजकः कोपेन - ''जोगी आया, जवार् खाया, उठो जाव्'' इति वदन् बलात् तस्य स्कन्धे प्रहृत्य ततः गतवान् एव ।

'एषः एव सर्पविषनिवारकः मन्त्रः' इति मत्वा सञ्जयः सन्तोषेण पुनः पुनः मनसि तदेव वाक्यम् उच्चारयन् गृहं गत्वा पत्नीम् उक्तवान् यत् परिव्राजकः कश्चित् मां सर्पविषनिवारकं मन्त्रं पाठितवान् इति । एषः विषयः तस्य पत्न्याः द्वारा ग्रामस्थैः सर्वैः ज्ञातः ।

ततः मासाभ्यन्तरे ग्रामे कश्चित् सर्पः दष्टवान् । तदा तस्य बान्धवाः चिन्ताक्रान्ताः अभवन् । एतत् दृष्ट्वा कश्चित् - ''सञ्जयः सर्पविषनिवारकं मन्त्रं जानाति । अतः भयं मास्तु । वयम् एतं तस्य समीपं नेष्यामः'' इति

उक्तवान् ।

पश्चात् तं सर्पदंशनयुक्तं जनाः सञ्जयस्य समीपम् आनीतवन्तः । सञ्जयः किञ्चित्कालं मन्त्रं मनसि एव जपितवान् । अनन्तरं सर्पदंशनयुक्तं जनं भुजे सम्यक् प्रहृतवान् । तेन सः सर्पदंशनयुक्तः अनुक्षणम् उत्थाय उपविष्टवान् । एतस्मात्, परिव्राजकेन बोधिते मन्त्रे सञ्जयस्य ग्रामजनानां च विश्वासः आगतः ।

तदनन्तरं यं कमपि सर्पः दशति चेत् जनाः तं सञ्जसमीपम् एव आनयन्ति स्म । मन्त्रकथनस्य अनन्तरं सः स्वस्थः च भवति स्म । कालक्रमेण सञ्जयः परितः सर्वेषु ग्रामेषु प्रसिद्धः अभवत् ।

तस्य साहाय्येन ये स्वस्थाः भवन्ति स्म ते यथाशक्ति धनरूपेण, धान्यरूपेण वा तस्य साहाय्यं कुर्वन्ति स्म । एतेन गच्छता कालेन सञ्जयस्य आर्थिकस्थितिः अपि उत्तमा अभवत् ।

सञ्जयः स्वक्षेत्रस्य समीपे एव नूतनं क्षेत्रं क्रीतवान् । स्वस्य लघुकुटीरस्य स्थाने उत्तमं गृहं निर्मितवान् । स्वपुत्रीं पार्श्वग्रामस्य धनिकपुत्राय दत्त्वा विवाहम् अपि निर्वर्तितवान् । सः महान् धनिकः जातः चेत् अपि यथापूर्वं परिश्रमेण कृषिकार्यं करोति स्म । यथाशक्ति ग्रामजनानां साहाय्यम् अपि कुर्वन् सः आनन्देन जीवनं यापयन् आसीत् ।

एवं सति कदाचित् दूरप्रदेशवासी तस्य बाल्यमित्रं कृष्णः तदीयं गृहम् आगतवान् । सः अपि मित्रस्य कीर्तिं श्रुत्वा सन्तुष्टः सन् तेन मेलितुम् आगतवान् आसीत् । सप्ताहं यावत् तौ बाल्यजीवनं स्मरन्तौ, अनन्तर-कालस्य जीवनस्य सुखदुःखानां विनिमयं कुर्वन्तौ विविधेन वार्तालापेन कालं यापितवन्तौ ।



प्रतिगमनात् पूर्वं कृष्णः कदाचित् सञ्जयम् उक्तवान् - ''परोपकारं कुर्वन् एव भवान् किञ्चित् धनं सम्पादयन् अस्ति इति विषयः तु श्लाघनीयः एव । परिव्राजकेन पाठितः मन्त्रः कः इति ज्ञातुं मम महती इच्छा । सः मन्त्रः कः इति कृपया वदतु'' इति ।

''तत्र किं वा रहस्यम् ? 'जोगी आया, जवार् खाया । उठो जाव्' इत्येव सः मन्त्रः'' इति उक्तवान् सञ्जयः ।

तत् श्रुत्वा कृष्णः उच्चैः हसन् - ''एषः एव वा सर्पविषनिवारकः मन्त्रः ? सः परिव्राजकः भवन्तं वञ्चितवान् अस्ति । सः प्रायः औत्तराहः स्यात् । 'योगी आगतवान् । जूर्णं खादितवान् । उत्तिष्ठ, गच्छ' इत्येव तस्य अर्थः । ते भवतः क्षेत्रे यथेष्टं जूर्णं खादित्वा एव गतवन्तः खलु । ते कमपि मन्त्रं न जानन्ति स्म । अतः एव भवान् तर्जयेत् इति भीत्या एव ते कोपेन भवन्तं तथा उक्त्वा गतवन्तः सन्ति । धान्यनाशं दृष्ट्वा अपि भवान् कोपं न प्राप्तवान् यत् ततः तैः ज्ञातं यत् भवान् नितरां सज्जनः इति । भवतः सज्जनतायाः दुरुपयोगः स्वीकृतः तैः '' इति उक्तवान् ।

'मित्रं कृष्णः कदापि असत्यं न वदति । एवं तर्हि परिव्राजकेन पाठितः मन्त्रः न । तेन यत् पाठितं तदेव स्मरता मया कृतं सर्वम् आडम्बरमात्रम् एव । अहं सर्वान् वञ्चितवान् अस्मि' इति चिन्तयन् सञ्जयः खिन्नः अभवत् ।

ततः सप्ताहानन्तरम् एव कञ्चित् सर्पदंशनयुक्तं जनं ग्रामजनाः सञ्जयस्य समीपम् आनीतवन्तः । सञ्जयः संशयेन एव मनसि मन्त्रं जपित्वा तस्य सर्पदंशनयुक्तस्य स्कन्धे प्रहृतवान् । तस्मिन् किमपि चलनं न दृष्टम् ।

अनुक्षणं सञ्जयः तान् जनान् - ''अहं कञ्चित् अपचारं कृतवान् अस्मि । अतः मम मन्त्रः न फलितः । कृपया एतम् अधुना एव नगरं प्रति नयन्तु । तत्र उत्तमाः वैद्याः सन्ति'' इति उक्तवान् ।

सञ्जयस्य मन्त्रशक्तिः नष्टा इति सर्वैः ज्ञातम् । सत्यवान् सञ्जयः अग्रे तस्य मन्त्रस्य प्रयोगं कदापि न कृतवान् एव । पूर्वं सम्पादितं यत् धनम् आसीत् तेनैव आनन्देन जीवनं कृतवान् सः ।





## चन्दमामायाः

## सुवर्णसमयः- १६

### १.आधाररहितं स्तम्भम् ...?

एकस्यां वितर्द्यां विद्यमानः अयं स्तम्भः केनापि प्रकारेण भूमिं न आलम्बितवान् अस्ति । ९०० वर्षेभ्यः पूर्वं विष्णुवर्धनः नाम होय्सलमहाराजः एतं निर्मितवान् अस्ति । एतम् ''आकर्षण-स्तम्भः'' इत्यपि जनाः वदन्ति ।



# विश्वे एतानि वयं कुत्र द्रष्टुं शक्नुयाम ?



### २. विश्वे एव उन्नतं धूमशकटमार्गम् ...?

एण्डस्पर्वतस्य उपरि समुद्रात् ४८१६ मी. उन्नतस्थाने विद्यमाने अस्मिन् मार्गे प्रयाणसमये वायोः सान्द्रतायाः अभावेन केषाञ्चित् प्रयाणिकानां कृते आम्लजनकम् आवश्यकं भवति । तादृशानां प्रयाणिकानां वैद्यकीयसेवार्थम् एव धूमशकटे अनुवैद्याः सर्वदा सज्जाः तिष्ठन्ति ।

### ३. पूर्णतया लवणशिलया निर्मितं भूगर्भनगरम् ... ?

इदं भूम्यां ३०० मी. अन्तः वर्तमाने लवणस्य खन्याम् अस्ति । इदं विचित्रं नगरं खनीकर्मकराणां दशवर्षाणां कार्यस्य परिश्रमस्य फलम् अस्ति । अस्मिन् नगरे कर्मकरैः एकः क्रिस्तदेवालयः, धूमशकट-निःस्थानकं, स्नानगृहाणि इत्यादीनि लवण-शिलायाः कृन्तनेन निर्मितानि सन्ति ।



## प्राणिसमस्या

## अहं कः ?



१. अहं ह्रस्वपादयुक्तः पक्षी । वायौ डयितुं न शक्नोमि । परं जले लीलया तरीतुं समर्थः अस्मि ।

२. अहं सामान्यतः मनुष्यः इव एव अस्मि । परम् अहं पादग्रस्य अङ्गुलीभिः एव चलामि ।

३. एतस्यां भूमौ वसत्सु सर्वेषु प्राणिषु बृहत्तमः अहम् ।

४. अहं डयितुम् अशक्तः पक्षी । अस्माकं देशस्य जनाः सर्वे अपि मम नाम्ना एव निर्दिश्यन्ते ।



५. सर्वेषु पक्षिषु अहमेव महत्तमः ।

६. मम पृष्टे बृहत् ककुत् अस्ति । 'मरुभूमेः नौका' इति नाम्ना अपि अहं प्रसिद्धः अस्मि ।

७. आस्ट्रेलियादेशस्य वन्यशुनकः इत्येव माम् आह्वयन्ति जनाः ।

## कथा समस्या

## किं तत् साक्ष्यम् ?

महाविद्यालये पठतः कस्यचित् छात्रस्य प्रकोष्ठे बहु धनम् अस्ति इति गौरवः ज्ञातवान् । अनुक्षणं सः स्वगृहस्य पुरतः विद्यमानात् द्विचक्रिकापणात् द्विचक्रिकां भाटकार्थं स्वीकृत्य वेगेन विद्यार्थिनिलयं प्रति गतवान् । द्विचक्रिकां द्विचक्रिका-स्थानके स्थापयित्वा सोपानानि आरुह्य बालकस्य प्रकोष्ठस्य समीपं गतवान् । प्रकोष्ठः कीलितः आसीत् । सः विना श्रमं तालं भञ्जयित्वा ततः धनं स्वीकृत्य शीघ्रं सोपानानि अवतीर्य द्विचक्रिकास्थानकम् आगतवान् । ततः स्वल्पे एव समये सः मुख्यमार्गं प्राप्तवान् ।

उत्साहेन गच्छन् सः अकस्मात् आत्मना कृतं कमपि दोषं स्मरन् अग्रे गन्तुम् अशक्तः सन् तत्रैव स्थितवान् । सः पुनश्च विद्यार्थिनिलयं प्रति गतवान् । किन्तु तावति काले विलम्बः जातः आसीत् । फुट्बाल्क्रीडां समाप्य गच्छद्भिः बालकैः चौर्यस्य विषयः ज्ञातः आसीत् । गौरवः द्विचक्रिकाम् आपणे प्रत्यर्प्य अनुक्षणं ततः पलायितवान् । आरक्षकाः अन्विष्यन्तः स्वगृहं यदा कदापि आगच्छेयुः इति भयेन युक्तस्य गौरवस्य स्वगृहं गन्तुम् अपि धैर्यं न आसीत् ।

'तेन परित्यक्तं साक्ष्यचिह्नं किम् ?' इति भवन्तः जानन्ति किम् ?



## विनोदप्रश्नाः

१. मधुमक्षिका अग्रे गन्तुं डयनं कर्तुं वा न शक्नोति किमर्थम् ?

२. आस्ट्रेलियादेशस्य मूलनिवासिनः तथा ''भूमरंग''नामकं साधनं प्रयोक्तुं शक्नुवन्ति यच्च पुनश्च यथा प्रयोक्तुः हस्तं प्रति एव आगच्छेत् । सामान्येन टेनिस्कन्दुकेन अपि तथा कर्तुं शक्यते । तत् कथम् ?



३. अस्मिन् चित्रे कश्चन दोषः अस्ति । सः कः ?



४. मम सुहृत् एकं कागदम् अङ्कनीं च स्वीकृत्य ''मम वामकर्णम् अहं लेखितुं शक्नोमि'' इति माम् उक्तवान् । ''लिखतु, पश्यामि'' इति अहं तं सूचितवान् । सः लिखित्वा प्रदर्शितवान् । तत् कथम् इति भवन्तः वक्तुं शक्नुवन्ति किम् ?

५. कश्चित् गजः भवतां कोषस्य करवस्त्रस्य उपरि



उपविष्टः अस्ति चेत् भवन्तः किं कुर्वन्ति ?

६. एकस्य वर्षस्य अनन्तरम् 'वत्सः' किं भवति ?

७. सर्वैः एकस्मिन् एव समये क्रियमाणं कार्यं किम् ?

## करणात् ज्ञायताम्

### अग्निपेटिकया चित्रशुनकः

**अपेक्षितानि वस्तूनि**

रिक्तम् अग्निपेटिकाद्वयं, त्रिणि ऐस्क्रीम्-खादननालानि, अग्निपेटिकायाः उपरि लेपनार्थं श्वेतं कागदं, छुरिका, कृष्णवर्णस्य फेल्टलेखनी, निर्यासः च ।

**सज्जीकरणक्रमः**

१. अग्निपेटिकायाः उपरि श्वेतं कागदं लेपयन्तु । ऐस्क्रीम्नालानाम् उपरि कृष्णवर्णं लेपयन्तु ।

२. एकस्याः अग्निपेटिकायाः अधः, अन्यस्याः अग्निपेटिकायाः उपरि च यथा आगच्छेत् तथा एकम् ऐस्क्रीम्नालं योजयन्तु ।

३. द्वितीयेन ऐस्क्रीम्नालेन समानखण्डद्वयं कुर्वन्तु । लाङ्गूलं, जङ्घा च यथा भवेत् तथा अग्निपेटिकायाः अन्तः योजयन्तु । तृतीयं नालं मध्ये कर्तयित्वा मस्तकस्य पार्श्वद्वये कर्णौ इव निर्यासेन लेपयन्तु ।

४. नेत्रे, हसत् मुखं, पृष्टस्य उपरि वर्णबिन्दून् च लिखित्वा भवतां प्रियं शुनकम् अलङ्कुर्वन्तु ।



**चित्रं लिखन्तु भवन्तः ।**



*आंग्ललिप्याः पञ्चमीं संख्यां कुपितपक्षिरूपेण कथं परिवर्तयितुं शक्यते ?*





*अत्र पश्यन्तु ---।*

*आंग्ललिप्याः षष्ठी संख्या*





*रुदत्-शिशुत्वेन कथं परिवर्तिता अस्ति पश्यन्तु --।*

## सुवर्णसमयस्य (१५) उत्तराणि

१. दक्षिण-अमेरिकादेशे गौटमालाप्रदेशे ।

२. अस्सांराज्यस्य जतिङ्गा ।

३. टर्किदेशस्य इस्तान्बुल् ।

**चित्रसमस्या**

१. आक्टोपस् २. फार्क् ३. नक्षत्रमीनः ४. डाल्फिन् ५. समुद्रस्य कूर्माः ६. जेल्लिमीनाः

**कथासमस्या**

बहिर्भागात् यदि वातायनस्य काचकः शिलया भञ्जितः स्यात् तर्हि काचकखण्डाः गृहस्य अन्तः एव पतिताः स्युः । काचकस्य खण्डाः तु वातायनात् बहिः उद्याने पतिताः आसन् इति कारणेन एतावत् तु निश्चितं यत् काचकः अन्तर्भागात् एव भञ्जितः भवेत् । चौर्यं यदा अभवत् तदा गृहे गृहस्य रक्षकः एव आसीत् इति कारणेन सः एव चोरः इति निर्णीतम् ।

**विनोदप्रश्नाः**

१. प्रथमचषके एकः शर्कराखण्डः, द्वितीयचषके खण्डद्वयं, तृतीयचषके च त्रयः खण्डाः स्थापनीयाः । पश्चात् तृतीयचषकः द्वितीयचषके स्थापनीयः । अधुना प्रत्येकस्मिन् चषके अपि विषमसंख्यायां खण्डाः भवन्ति ।

२. मातापुत्रसम्बन्धः । ३. अङ्गारः । ४. एकः एव । यदा एकः कपिः प्रविशति तदा पञ्जरं रिक्तं न भवति खलु ? ५. ते चलितुं न शक्नुवन्ति अतः । ६. सा स्थगिता घटी ।




# महाभारतम्

पश्च पाण्डवाः द्रौपदी च विराटस्य आस्थाने वसन्तः अज्ञातवासस्य दिनानि यापयन्तः आसन् । धर्मराजः द्यूतात् प्राप्तं धनं सहोदरेभ्यः यच्छति स्म । भीमः रुचिकराणि भक्ष्याणि सज्जीकृत्य अन्येभ्यः ददाति स्म । अर्जुनः अन्तःपुरे प्राप्तानि वस्त्रणि इतरेभ्यः यच्छति स्म । सहदेवः क्षीरदध्यादीनि अन्येभ्यः ददाति स्म । अश्वपोषणं दृष्ट्वा सन्तुष्टः राजा यत् उपायनादिकं यच्छति स्म तत् अन्येभ्यः ददाति स्म नकुलः । द्रौपदी सर्वदा अपि पतीनां योगक्षेमचिन्तनं करोति स्म । एवं ते परस्परहितं चिन्तयन्तः दिनानि यापयन्तः आसन् । 'वयम् अत्र स्मः इति वार्ता यदि दुर्योधनादिभिः ज्ञायेत तर्हि कष्टं स्यात्' इति सर्वे अपि चिन्ताक्रान्ताः आसन् ।

एवम् एव चत्वारः मासाः अतीताः । मत्स्यदेशे ब्रह्मोत्सवसमयः आसन्नः । उत्सवनिमित्तं विविधेभ्यः देशेभ्यः मल्लाः आगताः । विराटराजः मल्लयुद्धप्रियः आसीत् । अतः सः मल्लानां निमित्तं विशेष-व्यवस्थां कृतवान् आसीत् । स्पर्धायां भागग्रहणे सर्वे मल्लाः महता उत्साहेन आसन् ।

एवम् आगतेषु मल्लेषु जीमूतवाहनः अपि अन्यतमः । सः सर्वान् मल्लान् युद्धार्थं निमन्त्रयति स्म । सर्वे मल्लाः तेन सह युद्धात् भीताः भवन्ति स्म । अतः विराटः पाकशालायां स्थितं भीमम् आहूय सूचितवान् यत् भवता जीमूतवाहनेन सह युद्धं करणीयम् इति । 'राज्ञः आज्ञा न तिरस्करणीया' इति चिन्तयित्वा भीमः एतत् कार्यम् अङ्गीकृतवान् ।

भीमः जीमूतवाहनः च मदगजौ इव युद्धम् आरब्धवन्तौ । अतिभीकरं तयोः युद्धं प्रेक्षकाः महता सन्तोषेण दृष्टवन्तः । भीमः



जीमूतवाहनम् उन्नीय पाञ्चालिकाम् इव भ्रामितवान् यत् तत् दृष्ट्वा जनाः नितराम् आनन्दिताः । अन्ते भीमः जीमूतवाहनं भूमौ पातयित्वा मारितवान् । जीमूतवाहनं जितवते भीमाय विराटः बहूनि उपायनानि दत्तवान् ।

भीमस्य शक्तिसामर्थ्यादिकं दृष्टवान् विराटः तं न केवलं मल्लैः सह युद्धार्थम्, अपि तु सिंहगजादिभिः सह युद्धार्थम् अपि प्रेरितवान् । भीमः तु सर्वैः सह लीलया युद्धं करोति स्म । एतत् दृष्ट्वा विराटः सन्तुष्टः जातः । युद्धं द्रष्टुम् अन्तःपुरस्त्रियः अपि आगच्छन्ति स्म ।

अर्जुनः गाननर्तनादिषु अन्तःपुरस्त्रीः प्रशिक्ष्य तासां द्वारा राज्ञः पुरतः नर्तनादिकं कारयित्वा उपायनानि प्राप्नोति स्म । दुष्टान् अश्वान् निगृह्णन् नकुलः राजतः विविधानि उपायनानि प्राप्नोति स्म । सहदेवः अपि चिकित्सादिभिः पशून् रक्षन् राजतः उपायनानि प्राप्नोति स्म । पतयः राजनिमित्तं परिश्रमं यत् कुर्वन्ति तत् दृष्ट्वा द्रौपदी परितपति स्म ।

पाण्डवानाम् अज्ञातवासः समाप्तप्रायः आसीत् । तदभ्यन्तरे सिंहबलनामकस्य कीचकस्य वक्रदृष्टिः द्रौपद्यां पतिता । कीचकः विराटस्य श्यालः । सेनाधिपतिः अपि आसीत् सः । सुदेष्णायाः गृहे द्रौपदीं दृष्ट्वा मोहपरवशः सः भगिनीम् उद्दिश्य - ''इतः पूर्वं मया एतादृशी कदापि न दृष्टा । एतस्याः लावण्यं मां बाधते । का एषा ? गन्धर्वकुलजाता इव स्थिता एषा कुतः आगता ? अपूर्वसुन्दर्याः एतस्याः द्वारा कार्यं कार्यते यत् तत् किम् उचितम् ? एषा यदि मम गृहम् आगच्छेत् तर्हि एतां देवताम् इव पूजयेयम्'' इति उक्तवान् ।

सुदेष्णायाः अनुज्ञां प्राप्य ततः निर्गतः सः एकान्ते स्थितां द्रौपदीम् उद्दिश्य स्वस्य मनसः इच्छां निवेदितवान् ।

द्रौपदी तम् उक्तवती - ''एतादृशं वचनं सर्वथा अयुक्तम् । अहं परनारी । मयि भवतः आसक्तिः न शोभते'' इति ।

''मां निराकरोति चेत् भवत्या अनन्तर-काले पश्चात्तापः अनुभोक्तव्यः स्यात् । देशस्य, राज्ञः च उत्तराधिकारी अहम् एव । रूपेण यौवनेन च मत्समानः अन्यः कोऽपि नास्ति लोके । एतादृशः अहं यया भवत्या दासः करणीयः सा भवती किमर्थं भोगादिभिः वञ्चिता सती दासी इव अत्र कार्यं करोति ?'' इति उक्तवान् कीचकः ।



तदा द्रौपदी कोपेन - ''मद्विषयकः मोहः यदि भवता न परित्यज्यते तर्हि भवतः प्राणानां हानिः स्यात् । मम पतयः पञ्च गन्धर्वाः अहोरात्रं मम रक्षणे जागरूकाः भवन्ति इत्येतत् भवता ज्ञातम् एव स्यात् । भवान् पीडयन् अस्ति इत्येतत् यदि तैः ज्ञायेत तर्हि भवता मृत्युः आलिङ्गनीयः भवेत्'' इति उक्तवती ।

द्रौपद्याः एतत् वचनं श्रुत्वा अपि कीचकः किञ्चिदपि भीतः न जातः । द्रौपदीविषयकः तदीयः मोहः क्षणे क्षणे वर्धमानः आसीत् । अतः सः सुदेष्णायाः समीपं गत्वा - ''यदि सैरन्ध्री मया न प्राप्येत तर्हि अहं प्राणैः वियुक्तः भवेयम् । बहुधा प्रार्थिता अपि सा मयि अनुरक्ता न जाता'' इति उक्तवान् ।

अग्रजस्य स्थितिं दृष्ट्वा नितरां खिन्ना सुदेष्णा - ''सैरन्ध्री माम् आश्रितवती अस्ति । तस्याः रक्षणं मम कर्तव्यम् । पञ्च गन्धर्वाः तां सदा रक्षन्ति इति मया पूर्वम् एव सूचितम् अस्ति । सैरन्ध्रीविषयकमोहस्य कारणतः प्राणापायस्थितेः स्वागतीकरणम् अयुक्तम् । अतः त्यजतु मोहम्'' इति बोधितवती ।

''गन्धर्वाः सहस्राधिकाः अपि मम केशम् अपि कम्पयितुं न अर्हन्ति । एवं स्थिते पञ्चानां विषये मया किमर्थं चिन्तनीयम् ? पतिव्रता अपि सुन्दरे मयि अनुरक्ता स्यात् एव । सैरन्ध्री यदि मम ऐश्वर्यं पश्येत् तर्हि अवश्यं मद्वशा भवेत् । कथमपि तां मदनुकूलां विधाय मां रक्षतु'' इति एवं भगिनीं बहुधा प्रार्थितवान् कीचकः ।

''अये दुष्ट ! अस्थाने अनुरक्तः भवान् माम् अपि अत्र सहभागिनीं कर्तुम् इच्छति किम् ? भवतः पापं न केवलं भवत्कुलम्, अपि तु माम् अपि नाशयेत् । भवान् मम अनुजः इत्यतः सकृत् तु साहाय्यं करिष्यामि । इदानीं गृहं गत्वा भवान् सोमरसं विविधभक्ष्याणि च सज्जीकारयतु । तेषाम् आनयनार्थम् अहं सैरन्ध्रीं प्रेषयिष्यामि । तदा तत्र यथोचितं व्यवस्थां कृत्वा तस्याः वशीकरणं चिन्तयतु'' इति उक्तवती सुदेष्णा ।

कीचकः झटिति गृहं गत्वा सुदेष्णायाः वचनस्य अनुगुणं सर्वं सज्जीकृत्य द्रौपदीं प्रतीक्षमाणः स्थितवान् ।

तस्मिन् एव समये सुदेष्णा द्रौपदीम् आदिष्टवती - ''सैरन्ध्रि ! महती पिपासा मम । अतः भवती कीचकस्य गृहं गत्वा

पानार्थं किमपि आनयतु'' इति ।

''आर्ये ! अहं तत्र गन्तुं न अर्हामि । सः मोहान्धकारेण आवृतः अस्ति इति भवती जानीयात् एव । यदि अहं गच्छेयं तर्हि अहितकरं किमपि तत्र प्रवर्तेत । अतः भवती एतदर्थम् अन्यां परिचारिकां प्रेषयतु'' इति उक्तवती द्रौपदी ।

''मम आदेशानुगुणं सोमरसम् आनेतुं गतां भवतीं सः किं वा कुर्यात् ? अतः भवती निश्चिन्ततया गत्वा सोमरसम् आनयतु'' इति उक्त्वा सुदेष्णा द्रौपद्याः हस्ते एकं सुवर्णपात्रं दत्तवती ।

अनन्यगतिका द्रौपदी सुवर्णपात्रं गृहीत्वा कीचकस्य गृहं गतवती । तां दृष्ट्वा महता सन्तोषेण - ''सुन्दरि ! स्वागतं भवत्याः । प्राणेश्वर्याः भवत्याः आगमनात् मम भवनं पवित्रं जातम् । राजयोग्यानि वस्त्राणि धृत्वा रत्नाभरणादिभिः आत्मानम् अलङ्कृत्य मम अभीष्टं पूरयित्वा सुखेन अत्र वसतु भवती'' इति उक्तवान् ।

''सोमरसम् आनयतु इति आदिश्य राज्ञी मां प्रेषितवती अस्ति । महती पिपासा तस्याः । अतः अविलम्बेन सोमरसं ददातु कृपया'' इति उक्तवती द्रौपदी ।

''सोमरसम् अहम् अन्यद्वारा प्रेषयिष्यामि । अतः अलं चिन्तया'' इति वदन् कीचकः अग्रे आगत्य द्रौपद्याः हस्तं गृहीतवान् । एतस्मात् दिग्भ्रान्ता द्रौपदी बलात् तं पातयित्वा धावन्ती आगत्य विराटस्य सभां प्रविष्टवती । कीचकः अपि ताम् अनुसृत्य धावन् आगत्य सर्वेषु पश्यत्सु एव तस्याः केशपाशं गृहीत्वा तां



स्थगितवान् ।

एतत् दुराक्रमणं दृष्टवन्तौ तत्रत्यौ धर्मराजः भीमश्चापि । 'कीचकः मारणीयः एव' इति चिन्तयन् भीमः कोपेन उद्विग्नः जातः । तस्य नेत्रे रक्ते जाते । शरीरात् स्वेदधारा निर्गता । पुरतः स्थितं वृक्षम् उन्मूलयितुं सः उद्युक्तः ।

तदा धर्मराजः पादाङ्गुष्ठेन भीमस्य पादं स्पृष्ट्वा - ''अये ! पाकार्थं काष्ठानि आवश्यकानि चेत् एषः वृक्षः किमर्थं छेत्तव्यः ? अन्ये बहवः वृक्षाः सन्ति एव । तेषाम् उपयोगं करोतु तावत्'' इति सूचितवान् ।

अत्रान्तरे द्रौपदी पतीनाम् असहायकताम् अवगच्छन्ती तान् क्रोधेन दृष्ट्वा विराटम् उद्दिश्य - ''एतेन नीचेन क्रियमाणं मम




दुःखेन किमर्थम् अत्र विलपति ? अपमानितवन्तं दुष्टं भवत्याः पतयः यथायोग्यं दण्डयिष्यन्ति । अतः अलं चिन्तया'' इति उक्तवान् ।

द्रौपदी ततः प्रस्थाय अन्तःपुरं गत्वा विकीर्णकेशा सती विलपन्ती स्थितवती । तस्याः तां स्थितिं दृष्ट्वा सुदेष्णा पृष्टवती – ''मालिनि ! कः भवत्याः क्लेशं जनितवान् ?'' इति ।

''भवती सोमरसस्य आनयनार्थं मां कीचकभवनं प्रति प्रेषितवती । तत्र सः दुष्टः मां पीडयित्वा राजसभायाम् अपमाननं कृतवान् । एतत् दृष्ट्वा ये कोपं प्राप्तवन्तः ते एव तं दण्डयिष्यन्ति'' इति उक्तवती दुःखतप्ता द्रौपदी ।

वस्तुतः सा निर्णीतवती आसीत् यत् कीचकः मारणीयः एव इति । अतः सा रात्रौ भीमसमीपं गतवती । भीमः गाढनिद्रायां निलीनः आसीत् । द्रौपदी तम् उत्थापयन्ती – ''अये, मृतः इव एवं पतितः अस्ति खलु भवान् । यः जीवति सः राजसभायां जातं पत्न्याः अवमाननं दृष्ट्वा अपि मौनेन न तिष्ठति । उत्तिष्ठतु तावत्'' इति उक्तवती ।

भीमः झटिति शय्यातः उत्थाय – ''किमिदम् ? किमर्थम् असमये अत्र आगतं भवत्या ? मया किमपि करणीयं यदि स्यात् तर्हि तत् उक्त्वा शीघ्रम् इतः निर्गच्छतु तावत्'' इति उक्तवान् ।

''सर्वं जानन् अपि किमर्थम् एवं वदति भवान् ? भवतः अग्रजः द्यूतरतः आसीत् इत्यतः मम एषा दुर्गतिः । मया विराटपत्न्याः सेवा क्रियमाणः अस्ति यत् तस्य कारणतः

अपमाननं दृष्ट्वा अपि मम पतयः विवशाः सन्तः मौनेन सन्ति । मां न रक्षन्तः सन्ति ते । सर्वरक्षकः भवान् अपि एतं मानभङ्गप्रयत्नं दृष्ट्वा अपि मौनेन तिष्ठति यत् तत् किम् उचितम् ?'' इति उक्त्वा सभासदः उद्दिश्य – ''कीचकस्य राज्ञः च इव भवताम् अपि धर्मे उपेक्षा अस्ति किम् ?'' इति पृष्टवती ।

तदा विराटः – ''अम्ब ! भवत्याः कीचकस्य च वैमनस्यस्य कारणं किम् इति अहं न जानामि । एवं स्थिते एतद्विषये कथं वा धर्मनिर्णयं कुर्याम् ?'' इति पृष्टवान् ।

धर्मराजः द्रौपदीम् उद्दिश्य – ''भद्रे ! कोलाहलं किमपि अकृत्वा अन्तःपुरं गच्छतु भवती । भवत्याः पतयः मौनेन सन्ति यत् तस्य किमपि कारणं स्यात् एव । देशकालादिकम् अज्ञातवती इव भवती

एव कीचकः माम् अपमानयितुम् उद्युक्तः जातः । कार्यं कुर्वत्याः मम हस्तयोः रूक्षतां पश्यतु तावत्'' इति वदन्ती द्रौपदी स्वस्य हस्तौ प्रदर्शितवती ।

तदा भीमः - ''सः दुष्टः कीचकः राजसभायां यदा भवत्याः केशपाशे हस्तं प्रसारितवान् आसीत् तदा एव मया निर्णीतम् आसीत् यत् एषः मारणीयः इति । किन्तु अग्रजः मां निवारितवान् । वस्तुतः द्यूतदिने एव मया दुर्योधन-कर्ण-शकुनि-दुश्शासनादयः न मारिताः यत् तत् एव महते दोषाय । अलम् अधिकचिन्तया । तानि दिनानि प्रायः दूरे न सन्ति येषु भवती महाराज्ञी भवेत्'' इति उक्तवान् ।

''एतत् दुःखं मया सोढुं न शक्यते । महाराज्ञीत्वं दूरे तिष्ठतु नाम, मम मानरक्षणं कथम् इति आदौ चिन्तयतु भवान् । प्रवृत्तस्य अपमानस्य प्रतीकारः कथम् इति चिन्तयतु । मम सौन्दर्यं सर्वेषु मोहं जनयति । अतः एव कीचकः अविवेकेन व्यवहरन् अस्ति । मम पतयः गन्धर्वाः भवन्तं मारयेयुः इति अहं तं सूचितवती । किन्तु सः तस्मिन् वचने अनादरं प्रकटितवान् । सुदेष्णा तस्य साहाय्यम् आचरति । अतः एव सा सोमरसस्य आनयनार्थं मां प्रेषितवती । सः दुष्टः तत्र मां ग्रहीतुम् आगतः । भीता अहं पलाय्य राजसभाम् आगतवती । निर्मर्यादः सः राजसभायाम् एव मम केशपाशे हस्तं प्रसारितवान् । यदि भवान् तस्य दुष्टस्य शिरः न चूर्णीकरिष्यति तर्हि अहं विषपानेन आत्महत्यां करिष्यामि'' इति वदन्ती रुदती अश्रूणि स्रावितवती ।

भीमः तस्याः सान्त्वनं कुर्वन् तस्याः अश्रूणि मार्जयित्वा - ''भामिनि ! यथा भवत्या इष्यते तथा तम् अहं मारयिष्यामि । तदर्थं भवत्या साहाय्यं करणीयम् । रोदनं परित्यज्य मन्दहासपूर्वकं तस्य भवनं प्रति गन्तव्यं भवत्या । 'भवतः आशां पूरयिष्यामि । नृत्यशालायां दिने नर्तन-गानादिकं प्रचलति । किन्तु रात्रौ सा रिक्ता भवति । तत्र मञ्चः अपि अस्ति । भवान् रात्रौ तत्र आगच्छतु' इति भवती तं वदतु । अन्यः कोऽपि यथा न जानीयात् तथा कीचकं संहरिष्यामि अहम्'' इति उक्तवान् ।

एवं मन्त्रालोचनं कुर्वन्तौ तौ तां रात्रिं यापितवन्तौ । - (अनुवर्तते)



# रसवार्ताः

## षष्ठे वयसि कार्यानचालनम्

यदि कश्चित् बालः कार्यानस्य उपरि, अन्तः स्टीरिङ्ग समीपे वा उपविश्य छायाचित्रग्रहणाय उत्साहं प्रदर्शयेत् तर्हि न किमपि आश्चर्यं तत्र । परं कश्चित् षड्वर्षीयः बालः कार्यानं चालयति इति वार्ता तु आश्चर्यं जनयत्येव खलु ?

चेन्नैनगरस्य 'सदाशिव'नामकः षड्वर्षीयः बालः 'मारुति आम्नि' कार्यानं चालयति । गतजनवरिमासतः सः एतत् अपूर्वं साहसकार्यं कुर्वन् अस्ति । तस्य बालस्य मातापितरौ पद्मावती मुरलिः च । अयं बालः चेन्नैनगरस्थायां श्री आदित्य मेट्रिक्युलेषन् शालायां प्रथमकक्ष्यायां पठन् अस्ति । सदाशिवः उदयवर्गे (यु.के.जि.) प्रथमं स्थानं प्राप्तवान् अस्ति । अपि च भाषणस्पर्धायाम् अपि अग्रगण्यः अस्ति सः ।



## नवमे वयसि एव मेट्रिक्परीक्षायाम् उत्तीर्णता

''कश्चित् नवमे वयसि एव सि.बि.एस्.सि. संस्थया सञ्चाल्यमानायां दशमकक्ष्यापरीक्षायाम् उत्तीर्णः'' इति वार्ता तु अपूर्वा एव खलु ? गते मेमासे देहलीनगरस्य तथागत-अवतार-तुलसी-नामकः बालकः एतादृशं विक्रमं साधितवान् अस्ति । कथं सः एतत् साधयितुं शक्तः इति प्रश्नः भवेत् खलु ?



अन्ये बालाः इव सः शिशुस्तरीयकक्ष्याः न गतवान् । प्रत्युत साक्षात् तृतीयाकक्ष्याम् एव प्रविष्टवान् । न केवलं तावत्, तस्मिन् एव वर्षे सः चतुर्थ-पञ्चमकक्ष्ययोः पाठान् अपि पठितवान् । अतः सः प्रगतवर्षे साक्षात् षष्ठकक्ष्यां प्रविष्टवान् । १९९५तमे वर्षे देहल्यां कस्मिंश्चित् सार्वजनिकविद्यालये सः सप्तमकक्ष्यां प्रविष्टवान् । १९९६-९७तमे शैक्षणिकवर्षे सः अष्टमकक्ष्यायां पठितवान् । तस्मिन् एव समये नवमदशमकक्ष्ययोः पाठ्यविषयाणाम् अध्ययनं समाप्य सः पब्लिक्परीक्षां लेखितुम् अनुमतिं संप्रार्थ्य आवेदनपत्रं दत्तवान् । किन्तु तस्य वयः अल्पम् इति उक्त्वा सि.बि.एस्.सि.संस्थया तस्य आवेदनपत्रं तिरस्कृतम् । तदा तस्य पिता न्यायालयं गतवान् । ''तुलसये परीक्षायाः प्रवेशपत्रं दातव्यम्'' इति न्यायालयेन फेब्रवरी-मासस्य २६तमे दिनाङ्के सि.बि.एस्.सि.संस्था आदिष्टा । एवं ''विश्वे मेट्रिक्परीक्षाम् उत्तीर्णः कनीयान् बालकः'' इति विक्रमः साधितः अनेन मेधाविना बालकेन ।

## विश्वविक्रमः

उत्तानशायिनां मल्लानाम् उपरि कारयानस्य जीप्यानस्य वा चालनं सर्कस्मध्ये भवन्तः दृष्टवन्तः स्युः ? त्रिभ्यः वर्षेभ्यः पूर्वं बिहारराज्यस्य धनबाद्नगरस्थायाः सप्तदश-वर्षीयायाः सुमिता-सिङ्घवर्यायाः उपरि १५५०कि.ग्रां. भारेण युक्तं कार्यानं नीतम् । गते एप्रिल्मासे तस्याः एव उदरस्य उपरि ३२०० कि.ग्रां.भारेण युक्तं वस्तुवाहकं नीतम् । एषः कश्चन विश्वविक्रमः जातः अस्ति । भञ्जितगोलदीपानां गिलनम् अपि सा जलस्य पानवत् सरलं मन्यते । एषु दिनेषु एव तस्याः उदरस्य उपरि १०० कि.ग्रां.भारेण युक्तं शिलाफलकं संस्थाप्य पञ्च कि.ग्रां.भारयुक्तेन मुद्गरेण तस्य शिलाफलकस्य भञ्जनं कृतम् ।

चन्दमामायाः
अनुबन्धः - १०६



अस्मद्देशीया
सौन्दर्यखनी

# श्रवणबेळगोळम्

कर्णाटकराज्ये बेङ्गलूरुनगरात् अनतिदूरे 'श्रवणबेळगोळं' नाम लघुनगरम् अस्ति । अत्र 'चन्द्राद्रि'नामके पर्वते गोम्मटेश्वरापरनामधेयेन ख्यातस्य बाहुबलिनः उन्नतः विग्रहः अस्ति । ५७ पादोन्नतः एषः विग्रहः अखण्डशिलया निर्मितः अस्ति ।




द्वादशसु वर्षेषु एकवारम् अत्र महामस्तकाभिषेकः महता वैभवेन प्रचलति । एतस्य उत्सवस्य निमित्तं देशस्य नानाभागेभ्यः सहस्रशः भक्ताः आगमिष्यन्ति । गोम्मटेशस्य पूजायां भागं गृह्णन्ति च ।

उत्सवसमये मूर्तेः पार्श्वे उन्नता वेदिका निर्मीयते अत्र । ताम् आरुह्य अर्चकाः महाकलशेषु स्थितैः क्षीर-दधि-मधु-गन्ध-शुद्धोदकादिभिः गोम्मटेश्वरस्य शिरसि अभिषेकं कुर्वन्ति । एतेषां कलशानां मध्ये रजत-सुवर्णादिनाणकानि योजितानि भवन्ति ।

राज्ञः मल्लराजस्य आस्थाने प्रधानसेनापतिस्थानम् अलङ्कृतवान् चावुण्डरायः ९८१तमे क्रिस्ताब्दे अखण्डशिलानिर्मितम् एतं विग्रहं प्रतिष्ठापितवान् । ततः आरभ्य एतत् स्थलं प्रतिवर्षं कोटिशः भक्तान् आकर्षति ।

पुराणकालस्य राजानः

# हरिताः

पूर्वं हरिताः नाम कश्चन महासङ्गीतप्रेमी राजा आसीत् । सः सम्यक् गायति स्म । तस्य आस्थाने अनेके विद्वांसः आसन् । राजा तेभ्यः उत्तमप्रोत्साहं यच्छन् तान् पोषितवान् । तथापि कोऽपि हरितसम् अतिशेतुं शक्तः न अभवत् ।

हरिताः स्वगानेन नारदस्य प्रशंसापात्रं जातः आसीत् । सरस्वती, ब्रह्मा इत्यादीनां पुरतः गीत्वा तेषाम् अपि आशीर्वादं प्राप्तवान् आसीत् सः । तस्य कीर्तिः वैकुण्ठपर्यन्तं गता आसीत् । कदाचित् महाविष्णुः एव तम् आहूतवान् गानार्थम् । तस्य मधुरगानं श्रुत्वा विष्णुः आत्मविस्मृत्या निद्रां प्राप्तवान् ।



कदाचित् सङ्गीतस्य मूलपुरुषस्य परमेश्वरस्य गानं श्रोतुम् अवकाशः लब्धः हरितसा । शिवः शङ्कराभरणरागस्य आलापनं कृतवान् । तस्य रागस्य गानस्य विषये शिवेन अभिप्रायः यदा पृष्टः तदा - ''रागः स्वरः च सम्यक् अस्ति । भावः सम्यक् नास्ति'' इति उक्तवान् हरिताः । शङ्कराभरणरागः प्रशान्तचित्तेन आलापनीयः । किन्तु गानसन्दर्भे शिवः शान्तः न आसीत् ।

रागालापनसन्दर्भे 'हरितसः सङ्गीत-सामर्थ्यं कीदृशं स्यात्' इति चिन्तयता शिवेन दोषः कृतः आसीत् । हरितसः अप्रियेन विमर्शेन कुपितः शिवः तृतीयं नेत्रम् उद्घाटितवान् । शिवस्य तृतीयनेत्रेण सामान्यतः सर्वे भस्मीभवन्ति ।

तत् ज्ञात्वा अपि हरिताः निर्भीतः एव उक्तवान् - ''महादेव ! दोषः सर्वदा दोषः एव । अहं भस्मीभवामि चेदपि दोषः तु तथैव तिष्ठति एव'' इति । एवं परमेश्वरस्य परीक्षायाम् उत्तीर्णः हरिताः प्रसिद्धगायकः, विमर्शकः, धैर्यशाली च इति कीर्तिं प्राप्तवान् ।

एतस्य सामर्थ्यं दृष्ट्वा परमेश्वरः अपूर्वं वरं दत्तवान् । तस्य वरस्य कारणतः एव हरिताः देवेन्द्रम् अपि बद्धवन्तम् अन्धकासुरनामानं राक्षसाग्रेसरं मारयितुं समर्थः अभवत् ।

# ज्यास्सङ्गीतम्





नवदशस्य क्रिस्ताब्दस्य उत्तरार्धे अमेरिका-देशस्य दक्षिणभागे ज्यास्सङ्गीतम् आरब्धम् । एतत्सङ्गीतगायकाः एकेन स्थायिना आरभ्य विविधस्थायिनः अवलम्बमानाः अन्ते प्रथमस्थायिनम् एव अवलम्ब्य गानं स्थगयन्ति । १९२०तमवर्षस्य समीपस्थवर्षेषु एतेन सङ्गीतेन विशेषप्रचारः प्राप्तः । अमेरिकादेशे आबालवृद्धम् एतत् सङ्गीतम् आलाप्यते । ज्यास्सङ्गीतस्य अभिवृद्ध्यर्थं प्रसारार्थं च परिश्रमं कृतवत्सु प्रसिद्धाः सन्ति लूयिस् आर्मस्ट्राङ्ग्, बेन्निगुड्मन्, डिज्जिगिल्पै, ग्लेन् मिल्लर् इत्यादयः ।

# इन्द्रधनुः





## प्रथमः अन्तरिक्षगामी

ऐदम्प्राथम्येन व्योमनौकया प्रयाणं कृतवान् कः ? कश्चन शुनकः । 'लैका' इति तस्य नाम । एतत् भवत्सु आश्चर्यं जनयेत् कदाचित् । किन्तु एषा वस्तुस्थितिः इत्यत्र नास्ति संशयः । १९५७तमे क्रिस्ताब्दे नवम्बर्मासस्य तृतीये दिनाङ्के रशियादेशीयाः द्वितीयायां स्फुट्निक्-व्योमनौकायां 'लैका'नामकं शुनकम् उपवेश्य अन्तरिक्षं प्रति प्रेषितवन्तः । यत्र सः तिष्ठति स्म स च प्रकोष्ठः अनुकूलवातः (एर् कण्डीशन्ड्) आसीत् । आवश्यकानि आहारपानीयादीनि सर्वाणि तत्र स्थापितानि आसन् । आकाशे सः यान् व्यवहारान् प्रदर्शयति स्म तेषां चित्राणि भूमिं प्रति प्रेषयन्ति स्म व्योमनौकास्थानि यन्त्रसाधनानि । अन्तरिक्षं प्रति प्रेषितायाः व्योमनौकायाः प्रति-प्राप्त्यर्थं कोऽपि क्रमः अन्विष्टः न आसीत् । अतः लैकाशुनकः अन्तरिक्षे एव प्राणैः वियुक्तः अभवत् ।

स्वातन्त्र्यसुवर्णमहोत्सवसंवत्सरे चन्दमामायाः उपहारः

# प्रथमः स्वातन्त्र्यसङ्ग्रामः

*क्रि.श. १६००तमं वर्षम् इंग्लेण्ड्देशस्य इतिहासे उच्छ्रायस्थितियुक्तः कालखण्डः आसीत् । यद्यपि सः लघुदेशः, तथापि महान्तं स्वप्नम् एव पश्यन् आसीत् ।*

*तदा इंग्लेण्ड्देशं राज्ञी द्वितीया एलिजबेत् शास्ति स्म । सुप्रसिद्धः नाटककारः षेक्स्पियर् स्वस्य नाटकानां प्रदर्शनम् आरब्धवान् आसीत् । तस्मिन् एव कालखण्डे नाविकः सर् वाल्टर् र्याली अमेरिकातः आलुकं, तमाखुं च स्वदेशं प्रति आनीतवान् । सर् फ्रान्सिस् बेकन्वर्यः नूतनशैल्या प्रबन्धान् लिखितवान् । एवम् अनेके प्रमुखाः स्वक्षेत्रेषु विशेषतया प्रसिद्धिं गताः ।*

*तस्य एव शतकस्य अन्तिमदिनेषु ''ईष्ट् इण्डिया कम्पनी'' नामिकायै वाणिज्यसंस्थायै दूरे विद्यमानेषु पूर्वदेशेषु स्ववस्तूनि विक्रेतुम् अनुमतिं यच्छन्ती पत्रे हस्ताङ्कनं कृतवती राज्ञी । तस्याः संस्थायाः प्रतिनिधिः सर् थामस्रोनामकः तदानींतन-मोगलराजस्य जहाङ्गीरस्य आस्थाने त्रीणि वर्षाणि यावत् आसीत् । तस्मिन् महाराजस्य अभिमानः उत्पन्नः । अतः महाराजः भारते वाणिज्यं कर्तुं तस्मै अनुमतिं दत्तवान् । इत्थं सूरत्नगरे आरब्धं वाणिज्यं शीघ्रमेव अन्येषु प्रदेशेषु अपि प्रसृतम् अभवत् ।*

*कालक्रमशः प्रवृद्धा ईस्ट्-इण्डियासंस्थायाः आशा आयात-निर्यातस्य सीमाम् अतिक्रम्य अन्येषां कार्याणाम् आरम्भस्य प्रचोदिका अभूत् । तदानीन्तनः मोगल्महाराजः दुर्बलः आसीत् इति कारणेन लघूनां संस्थानानां राजानः अपि प्रबलाः अभवन् । तेषु परस्परं स्पर्धा अपि आरब्धा । एतस्याः परिस्थितेः सम्यक् उपयोगः कृतः ईस्ट् इण्डियासंस्थया । तया अपि अल्पं सैन्यं निर्मितम् । राज्ञोः मध्ये वैरत्वम् उत्पाद्य तयोः एकस्मै सैन्यस्य साहाय्यं दत्त्वा पश्चात् तस्य प्रतिफलरूपेण तस्मात् राज्ञः किञ्चित् भूप्रदेशं प्राप्नोति स्म सा संस्था ।*

*एवं शतस्य सार्धैकशतस्य वा वर्षाणाम् अभ्यन्तरे अस्य देशस्य राजभ्यः अपि ईस्ट् इण्डिया संस्था बलवती जाता । तस्याः शक्तिः दिने दिने प्रवृद्धा । विविधानि कारणानि उक्त्वा उपायेन, बलप्रयोगेण वा सर्वेषां राज्यानां स्वायत्तीकरणम् आरब्धवती सा । अन्ते ब्रिटिष् इण्डिया नामकं साम्राज्यं एव स्थापितं तया । अञ्जलिं बद्ध्वा, शिरः अवनमय्य अस्मिन् देशे वाणिज्यार्थं अनुमतिं प्राप्तवन्तः ते वणिजः अल्पे एव काले आश्रयदातॄणाम् एव अधिकारं स्वायत्तीकृतवन्तः । वणिजः एव राजानः अभूवन् ।*

*आगतानां तेषां शते सार्धैकशते वा वर्षेषु अतीतेषु एव तेषां विषये भारतीयानाम् असहना अत्यधिका जाता आसीत् । तस्याः एव स्फोटः सङ्घर्षरूपेण अभवत् । तस्मिन् अधिकसंख्यायां सैनिकाः एव आसन् इति कारणेन ब्रिटिष्जनाः तं सङ्घर्षं सैनिकविद्रोहः इति निर्दिष्टवन्तः । किन्तु सः सङ्घर्षः न केवलं सैनिकैः, अपि तु सर्वैः देशभक्तैः मिलित्वा कृतः आसीत् । अतः सः एव ब्रिटिष्शासनस्य विरुद्धं कृतः भारतस्य प्रथमः स्वातन्त्र्यसङ्ग्रामः इति कथनम् एव युज्यते ।*

सायं सन्ध्यासमयः । अस्ताचलं गच्छतः सूर्यस्य किरणैः रञ्जिता आसीत् भागीरथीनदी । तस्याः तीरे कश्चित् अष्टादशवर्षीयः तेजस्वी युवकः सप्तवर्षीयां बालिकाम् एकां खड्गविद्यां पाठयन् अस्ति । बालिका लीलया खड्गं चालयन्ती अस्ति । नदीजले प्रतिबिम्बितैः सूर्यकिरणैः रञ्जितानि तयोः वस्त्राणि अपि सुवर्णकान्त्या शोभन्ते स्म । शताधिकाः जनाः तौ निर्निमेषम् आश्चर्येण पश्यन्तः आसन् ।

युवकः यदि वेगेन खड्गं चालयेत् तर्हि न तत्र आश्चर्यम् । किन्तु अल्पवयस्का काचित् बालिका खड्गं चालयति यत् तत् तु आश्चर्याय एव खलु ? लीलया खड्गं चालयन्तीं बालिकां दृष्ट्वा सम्मिलिताः सर्वे जनाः आश्चर्यचकिताः सन्तः पश्यन्तः आसन् ।

तदा चित्तूरुराज्यम् अथितित्वेन आगतः झान्सिराज्यस्य राजपुरोहितः – ''युवराजेन सह क्रीडन्ती सा बालिका का ?'' इति आत्मना सह आगतं पेश्वेबाजिरावस्य मन्त्रिणं पृष्टवान् ।

''मोरोपन्तस्य प्रीतिपात्रं मनूबायी सा । युवराजः अपि ताम् अनुजां मन्यमानः राजोचिताः विद्याः पाठयन् अस्ति । यद्यपि सा बाला अस्ति, तथापि प्रौढता अस्ति तस्याः चिन्तने । तस्याः व्यवहारः महाराज्ञ्याः इव एव अस्ति अपि'' इति उक्तवान् मन्त्री ।

''राज्ञ्यां याः अर्हताः भवेयुः ताः सर्वाः तस्यां सन्ति । दर्शनेन एव मम मनसि सः विचारः आगतः अस्ति'' इति उक्तवान् पुरोहितः ।

मोगल्साम्राज्यमेव कम्पितवतः मराठानायकस्य महाराजस्य छत्रपति-शिवाजेः प्रधानमन्त्रिणां वंशे जातः द्वितीयः





बाजीरावः । शिवाजेः अनन्तरं तस्य प्रधानमन्त्री एव राज्यपालनम् आरब्धवान् । पश्चात् तस्य वंशजाः एव राजानः अभवन् । ईस्ट्-इण्डियासंस्था वञ्चनया तेषां राज्यस्य स्वायत्तीकरणम् आरब्धवती । अन्ते केनापि अधिकारेण विना तया संस्थया दीयमानेन गौरवधनेन जीवनीयम् आपतितं द्वितीयबाजीरावेण ।

द्वितीयबाजीरावस्य पुत्राः न आसन् । स्वस्य आस्थाने उद्योगिनः कस्यचित् पुत्रस्य माधवरावनामकस्य बालकस्य बुद्धिमत्तां व्यवहारं च बाजीरावः इष्टवान् । अतः तं सः दत्तकपुत्रत्वेन स्वीकृतवान् । क्रि.श. १८२७तमे वर्षे एकस्मिन् शुभे मुहूर्ते माधवरावः बाजीरावस्य उत्तराधिकारी अभवत् ।

प्रवृद्धः सः एव नानासाहेब् इति प्रसिद्धः अभवत् । तस्मात् खड्गविद्याम् अधीतवती तीक्ष्णमतिः साहसशीला बालिका एव अग्रे वीरवनिता झान्सीराणी लक्ष्मीबायी इति प्रसिद्धिं गता ।

झान्सीपुरोहितः स्वराज्यं प्रतिगत्य तस्याः बालिकायाः विषयं राजानं निवेद्य तस्य अनुमतिं प्राप्य प्रधानमन्त्रिणा, अन्यैः कैश्चित् प्रमुखैः च सह चित्तूरुनगरम् आगत्य - ''मनूबायी झान्सीमहाराजाय गङ्गाधररावाय दातव्या'' इति प्रार्थितवान् ।

पश्चात् विवाहः अपि महता वैभवेन प्रवृत्तः । मनूबायी महाराज्ञी लक्ष्मीबायी अभवत् । किन्तु आनन्दमयं दाम्पत्यजीवनं तस्याः ललाटे लिखितं न आसीत् । अष्टादशे वयसि एव तया पतिवियोगः सम्प्राप्तः ।

अपरत्र ततः पूर्वमेव बाजीरावः अपि दिवङ्गतः १७५१तमे वर्षे । पश्चात् नानासाहेबाय गौरवधनदानं निराकृतवती ईस्ट् इण्डिया संस्था । तया कारणम् उक्तम् आसीत् यत् नानासाहेबः बाजीरावस्य औरसपुत्रः न इति । तस्यां वार्तायां नानासाहेबः विश्वसितुम् एव न शक्तः । गौरवधनस्य दानस्य अङ्गीकरणस्य अनन्तरम् एव राज्यं तस्यै संस्थायै समर्पितम् आसीत् बाजीरावेण ।

'कथं वा तावच्छीघ्रं वचनं परिवर्तेत' इति चिन्तयन् नानासाहेबः विषयं विस्तरेण ज्ञातुम् इच्छन् संस्थायै एकं पत्रं लिखितवान् - ''यदि भवन्तः गौरवधनं न यच्छन्ति तर्हि राज्यं पुनः आस्माकीनम् एव भविष्यति

खलु ? भवद्भिः एव अङ्गीकृतः नियमः भवद्भिः एव न पाल्यते चेत् सन्धेः भङ्गः जातः इत्येव मन्तव्यम् खलु अस्माभिः ?'' इति ।

नानासाहेबस्य प्रश्नानां समुचितम् उत्तरं दातुं न शक्तवती ईष्ट्-ईण्डियासंस्था, अपि च तद्विषये उपेक्षाम् एव प्रदर्शितवती सा । यतः संस्थायै राज्यस्य समर्पणस्य अनन्तरं नानासाहेबस्य समीपे स्वकीयं सैन्यम् एव न आसीत् । नानासाहेबः कथमपि युद्धं कर्तुं न शक्नोति इति संस्थाजनानां विश्वासः आसीत् ।

'भारते विद्यमानाः अधिकारिणः एवं दुर्मार्गिणः सन्ति । लण्डन्मध्ये विद्यमानाः उत्तमाः स्युः' इति चिन्तयित्वा 'उन्नताधिकारिणे सर्वं निवेद्य आगच्छतु' इति आदिश्य नानासाहेबः स्वस्य राजदूतम् अजिमुल्लानामकम् इंग्लेण्ड्देशं प्रति प्रेषितवान् ।

अजिमुल्ला विवेकी, यजमानस्य विश्वासपात्रम्, इंग्लीष्-प्रेञ्च्-भाषाभिज्ञः, वाग्मी च आसीत् । लण्डन्नगरे तस्य अनेके सुहृदः अपि आसन् । किन्तु ईस्ट् इण्डिया संस्थायां तेषां कोऽपि अधिकारः न आसीत् इति कारणेन अजिमुल्लाखानः चिन्तितं कार्यं साधयितुं न शक्तवान् ।

तथापि विदेशवणिजां सज्जनतायां नानासाहेबस्य पूर्णतया विश्वासः न नष्टः ।

गङ्गाधररावः मरणात् पूर्वं दत्तक-पुत्रस्वीकरणाय पत्न्यै अधिकारं दत्तवान् आसीत् । पत्युः मरणं लक्ष्मीबाय्याः वज्राघातः इव एव आसीत् । तथापि दुःखं



सोढ्वा पत्युः अपेक्षानुसारं भारतीय-पद्धत्यनुगुणम् एकं लघुशिशुं दत्तकत्वेन स्वीकृतवती सा ।

दुःखम् अन्तः निरुध्य पत्युः अन्त्यक्रियाः, दत्तकस्वीकरणं च युगपत् धैर्येण निरूढवती लक्ष्मीबायी । मन्त्रिणः, अधिकारिणः, सामान्यजनाः च तस्याः असामान्यं धैर्यं, साहसं, नायकत्वगुणं, मातृहृदयं च दृष्ट्वा आश्चर्यचकिताः अभवन् । राजवंशीया काचित् विधवा दुःखसमये सहोदरादिबान्धवानां साहाय्येन विना अपि राज्यपरिपालनं करोति इति विषयः सामान्यः न खलु ? राजा यदा दिवङ्गतः तदा बान्धवाः राज्यं स्वायत्तीकर्तुं प्रयत्नं कृतवन्तः एव । तथापि तान् सर्वान् निगृह्य लक्ष्मीबायी शासनव्यवहारं निर्बाधं

कृतवती ।

अथ कदाचित् प्रधानमन्त्री चिन्ताक्रान्तः सन् लक्ष्मीबाय्याः समीपम् आगत्य - ''महाराज्ञि ! भवत्या अधुना काचित् दुर्वार्ता श्रोतव्या अस्ति'' इति उक्तवान् खेदमिश्रितेन स्वरेण ।

''पत्युः मरणवार्तातः अपि घोरतरा का वा भवितुं शक्नोति ? अतः भवान् धैर्येण वक्तुम् अर्हति'' इति उक्तवती लक्ष्मीबायी ।

''मातः ! भवत्याः दत्तकपुत्राय राज्यं न दीयते इति वदन्ति ईस्ट् इण्डियासंस्थायाः जनाः'' इति उक्तवान् प्रधानमन्त्री ।

''अस्माकं राज्यस्य उत्तराधिकारी कः भवेत् इति निर्णेतुं ते के ? राज्ञः इच्छानुसारं तत् प्रचलति । राज्ञः अभावे राज्ञी एव तद्विषये निर्णयं स्वीकरिष्यति'' इति उक्तवती गम्भीरतया लक्ष्मीबायी ।

''दत्तकपुत्रस्य स्वीकरणं वयं न अङ्गीकुर्मः इति ते उक्तवन्तः सन्ति'' इति उक्तवान् मन्त्री ।

''तेषाम् अङ्गीकारः कैः पृष्टः अधुना ? औरसपुत्रस्य इव दत्तकपुत्रस्य सर्वे अधिकाराः सन्ति एव । तच्च अस्यां भूमौ परम्परया आगतः नियमः । एतं नियमं ये न जानन्ति, ये च भारतीयपरम्परायाः सर्वथा अजभिज्ञाः तैः उक्तं किमर्थं वा अङ्गी-करणीयम् अस्माभिः ? सीता जनकस्य पुत्री न इति कोऽपि वक्तुं शक्नोति किम् ? ते तावत् अपि अजानन्तः मूर्खाः किम् ?'' इति पृष्टवती लक्ष्मीबायी ।

''अम्ब ! ते न मूर्खाः, अपि तु परमधूर्ताः । न केवलं झान्सी, अपि तु समग्रः भारतदेशः स्वायत्तीकरणीयः इति ते योजनां कुर्वन्तः सन्ति'' इति उक्तवान् प्रधानमन्त्री ।

''तत् कदापि न भवत्येव । अस्माकं मातृभूमिं विद्रोहिणां हस्ते अहं न समर्पयामि । ते यत्किमपि कुर्वन्तु नाम । अस्माभिः तु राष्ट्रस्य गौरवरक्षणार्थं स्वातन्त्र्यार्थं च कार्यं करणीयमेव'' इति उक्तवती लक्ष्मीबायी । महाराज्ञ्याः तादृशानि पौरुषयुक्तानि वचनानि श्रुत्वा सर्वेषां शरीरे पौरुषस्य सञ्चारः अभवत् । तस्याः धैर्यं अभिनन्दन्तः सर्वे तां नमस्कृतवन्तः ।

- (अनुवर्तते)





# परिवर्तितः निर्णयः

सिंहलदेशे पूर्वं कश्चन वणिक् आसीत् । सः समुद्रवाणिज्येन प्रभूतं धनं सम्पादितवान् आसीत् । वार्धक्यं प्राप्य सः आसन्नमरणः यदा जातः तदा पुत्रं जयरामम् आहूय स्वस्य वाणिज्यादिव्यवहारस्य समग्रं विवरणम् उक्त्वा – ''वत्स ! अहम् इव भवान् अपि समुद्रवाणिज्यम् एव करोतु । किन्तु कदापि वञ्चनापुरं तु मा गच्छतु'' इति बोधितवान् ।

पितुः मरणस्य अनन्तरं जयरामः चतस्रः महानौकाः स्वीकृत्य समूद्रवाणिज्यार्थं प्रस्थितवान् । 'वञ्चनापुरं गतं चेत् किं भवेत् इति परीक्षणीयम्' इति जिज्ञासा उत्पन्ना जयरामस्य मनसि । स तु बुद्धिमान् आसीत् । 'यदि कोऽपि मां वञ्चयेत् तर्हि प्रतिवञ्चनं कर्तुम् अहं समर्थः अस्मि एव' इति चिन्तयित्वा सः वञ्चनापुरं गतवान् ।

सूर्योदयसमये तेन वञ्चनापुरं प्राप्तम् । नौकाः समुद्रतीरे परित्यज्य सः धनुर्बाणादिकं गृहीत्वा मृगयार्थं प्रस्थितवान् । किञ्चिद्दूरं यदा गतं तदा तेन कश्चन बकः दृष्टः । जयरामः बकं लक्ष्यीकृत्य बाणप्रयोगं कृतवान् । एकेन एव बाणप्रहारेण बकः मृतः ।

ततः अनतिदूरे एव मीनग्रहणे रतः कश्चन धीवरः एतत् दृष्ट्वा जयरामसमीपम् आगत्य – ''कः भवान् ? मम पितरं मारितवान् खलु भवान् ! भवतः एतं दुराचारं राजानं निवेदयिष्यामि'' इति उक्तवान् ।

''किं बकः भवतः पिता ?'' इति आश्चर्येण पृष्टवान् जयरामः ।

''आम् । गतजन्मनि मम पिता आसीत् सः । एतस्मिन् जन्मनि बकरूपेण जन्म प्राप्य मीनग्रहणे मम साहाय्यं करोति स्म सः'' इति उक्तवान् सः धीवरः ।

एतत् श्रुतवतः जयरामस्य महान् कोपः

'पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा'

आगतः । ''रे दुष्ट, गच्छतु तावत् । यं कमपि भवान् निवेदयति चेदपि न काऽपि हानिः मम'' इति कोपेन तम् उक्तवान् जयरामः । धीवरः प्रतिवचनं विना ततः निर्गतवान् ।

अनन्तरं जयरामः नगरं प्रविष्टवान् । नगरे मार्गे यदा सः गच्छन् आसीत् तदा कश्चन जनः तस्य अभिमुखम् आगत्य - ''चिरकालानन्तरं प्राप्तः खलु भवान् ! पूर्वं कदाचित् मम दक्षिणकर्णं न्यासीकृत्य भवतः पितुः सकाशात् मया दश रूप्यकाणि स्वीकृतानि आसन् । तत् ऋणं प्रत्यर्पयिष्यामि अद्य । मम दक्षिणकर्णं प्रत्यर्पयतु भवान्'' इति उक्तवान् ।

जयरामः आश्चर्यम् अनुभवन् तं जनं दृष्टवान् । तस्य वामकर्णमात्रम् आसीत् । दक्षिणकर्णः न आसीत् । ''कर्णन्यास-विषयं मम पिता मां न उक्तवान् खलु !'' इति तम् उक्तवान् जयरामः ।

''तदर्थं मया किं करणीयम् ? मम दक्षिणकर्णं प्रत्यर्पयतु । अन्यथा सर्वं राजानं निवेद्य भवन्तं दण्डयिष्यामि'' इति उक्त्वा सः ततः निर्गतवान् ।

जयरामः पुनः किञ्चित् अग्रे गतवान् । तदा काचित् तस्य समीपम् आगत्य - ''अये, पञ्चदशवर्षेभ्यः पूर्वम् एतं देशम् आगतः भवतः पिता मां परिणीतवान् आसीत् । इतः प्रतिगमनसमये माम् अत्रैव परित्यक्तुम् इच्छन् 'जीवननिर्वहणार्थं भवत्यै दशसहस्रं रूप्यकाणि दास्यामि' इति उक्तवान् आसीत् सः । तत् धनं भवता इदानीं दातव्यम् । अन्यथा एतं व्यवहारं महाराजं निवेदयिष्यामि'' इति धाष्ट्र्येन उक्तवती ।

जयरामः एतं दुष्टव्यवहारम् असहमानः - ''रे, निर्गच्छतु इतः । भवत्यै एकां



वराटिकाम् अपि न दास्यामि अहम्'' इति उक्त्वा स्वस्य नौकायाः समीपम् आगतवान् ।

तत्र नौकास्थाने कश्चन क्षौरिकः एतस्य दृष्टिगोचरः जातः । ''मुखक्षौरादिकं किमपि करणीयं वा श्रीमन् ?'' इति पृष्टवान् सः क्षौरिकः ।

''कियत् शुल्कम् ?'' इति पृष्टवान् जयरामः ।

''भवता अहं सन्तोषितः चेत् तदेव शुल्कं मम'' इति उक्तवान् क्षौरिकः ।

जयरामः एतत् अङ्गीकृत्य मुखक्षौरं कारितवान् । शुल्करूपेण एकं रूप्यकं यदा दत्तं तदा क्षौरिकः तस्य स्वीकरणं निराकृतवान् । पञ्च रूप्यकाणि दत्तानि चेदपि तानि न स्वीकृतवान् क्षौरिकः ।



तदा जयरामः कोपेन - ''भवते अहं किमपि न ददामि । भवान् यत् इच्छति तत् करोतु नाम'' इति उक्तवान् ।

ततः धीवरः, एककर्णः, महिला, क्षैरिकः च राजसभां गत्वा जयरामम् अधिकृत्य दोषारोपणं कृतवन्तः । जयरामः राजसभां प्रति आनायितः । विचारणा आरब्धा । आदौ धीवरः राजानम् उक्तवान् - ''महाराज ! दिवं गतः मम पिता बकरूपेण जन्म प्राप्य मीनग्रहणे मम साहाय्यं कुर्वन् आसीत् । एषः तं मारयित्वा मम अपरिमितां हानिं जनितवान् अस्ति'' इति ।

राजा जयरामं दृष्ट्वा - ''यः अपराधः कृतः तदर्थं भवता एतस्मै धीवराय एका नौका दातव्या'' इति आदिष्टवान् ।

अनन्तरम् एककर्णः उत्थाय उक्तवान् - ''प्रभो ! मम दक्षिणकर्णं न्यासीकृत्य अहम् एतस्य पितुः सकाशात् दश रूप्यकाणि ऋणरूपेण प्राप्तवान् आसम् । इदानीम् अहम् ऋणं प्रत्यर्पयितुं सिद्धः अस्मि । किन्तु एषः मदीयं दक्षिणकर्णं दातुं न सिद्धः । भवता एव न्याय्यान्याय्यं निर्णीय वक्तव्यम्'' इति ।

''भवता तदीयः दक्षिणकर्णः दातव्यः । अन्यथा तस्मै एका नौका वा दातव्या'' इति जयरामम् उद्दिश्य उक्तवान् राजा ।

अनन्तरं सा महिला दोषारोपणं कृतवती । ''तस्यै अपि एका नौका दातव्या'' इति स्वकीयं निर्णयं श्रावितवान् राजा ।

अन्ते क्षौरिकः राजानम् उक्तवान् - ''मया क्षौरं कृतम् । प्रतिफलरूपेण एतेन



अहं सन्तोषणीयः अस्मि । एषः आवयोः सन्धिः । एतेन एका नौका दत्ता चेदेव मम सन्तोषः भवति, न अन्यथा'' इति ।

''क्षौरिकः यत् वदति तत् न्याय्यम् एव अस्ति । अतः भवता एतस्मै एका नौका दातव्या एव'' इति जयरामम् आदिष्टवान् राजा ।

राज्ञः न्यायनिर्णयक्रमं दृष्ट्वा जयरामः नितराम् आश्चर्यचकितः । एतस्य नगरस्य वञ्चनापुरम् इति नाम किमर्थम् आगतम् इति, अत्र गमनं मास्तु इति पिता किमर्थम् उक्तवान् आसीत् इति च जयरामेण इदानीम् अवगतम् । सम्पत्तिभूतानां चतसृणां नौकानां दानम् आपतितम् आसीत् इदानीम् । 'एतस्मात् अपायात् मुक्तिं प्राप्तुं किं करणीयम् ?' इति क्षणकालं चिन्तितवान् जयरामः ।

अत्रान्तरे अल्पवयस्कः राजकुमारः राजसभाम् आगतवान् । तदा जयरामः स्वकण्ठे स्थितं रत्नहारं राजकुमारस्य कण्ठे स्थापितवान् ।

राजा पुत्रं स्वसमीपम् आहूतवान् । राजकुमारस्य कण्ठे स्थितं रत्नहारं दृष्ट्वा सन्तोषं प्रकटितवान् सः ।

जयरामः सभासदः उद्दिश्य – ''भोः, मया राजकुमाराय कण्ठहारः दत्तः यत् तत् दृष्ट्वा अपि सन्तोषम् अप्राप्तवान् अत्र कोऽपि अस्ति वा? ''इति पृष्टवान् !

''वयं सर्वे सन्तुष्टाः स्मः'' इति उक्तवन्तः सभासदः ।

जयरामः क्षौरिकं पश्यन् – ''भोः ! एतद्विषये कः अभिप्रायः भवतः ? एतस्मात् भवान् अपि सन्तुष्टः अस्ति खलु ?'' इति पृष्टवान् ।

क्षौरिकः अनन्यगतिकतया ''आम्'' इति उक्तवान् ।

तदा जयरामः महाराजम् उद्दिश्य – ''भवतः पुरतः एव अहं क्षौरिकं सन्तोषितवान् अस्मि । अतः एतस्मै मया नौका दातव्या नास्ति इति मम अभिप्रायः'' इति उक्तवान् ।

''आम् । भवता एतस्मै नौका दातव्या नास्ति'' इति उक्तवान् राजा ।

अनन्तरं जयरामः महिलां पश्यन् – ''अम्ब ! परिहारधनं दातव्यम् एव । अहं दातुं सिद्धः अस्मि अपि । किन्तु पत्न्या पत्युः कुलस्य आचारः पालनीयः एव । अस्माकं कुलस्य नियमः अस्ति यत् पत्युः मरणानन्तरं

पत्नी चितां प्रविशेत् इति । दुरदृष्टवशात् वर्षात् पूर्वं मम पिता दिवं गतः अस्ति । अतः भवत्या चिता प्रवेष्टव्या । तदनन्तरं भवत्याः बान्धवेभ्यः धनं दास्यामि अहम्'' इति उक्तवान् ।

''अहं कदापि चितारोहणं कर्तुं न सिद्धा'' इति उद्वेगमिश्रितेन स्वरेण उक्तवती महिला ।

तदा जयरामः राजानम् उद्दिश्य - ''महाराज ! मत्कुलधर्मम् अपालितवत्यै एतस्यै मया नौका दातव्या नास्ति इति अहं भावयामि'' इति उक्तवान् ।

राजा - ''भवदुक्तं युक्तम्'' इति उक्तवान् ।

अनन्तरं जयरामः एककर्णम् उद्दिश्य - ''भवतः कर्णस्य प्रत्यर्पणे मम आक्षेपः कोऽपि नास्ति । यदा मम पिता जीवति स्म तदा सहस्राधिकाः जनाः कर्णं न्यासीकृत्य धनं प्राप्तवन्तः आसन् । ते कर्णाः इदानीं मम देशे सन्ति । तेभ्यः भवतः कर्णस्य पृथक्करणं कष्टकरम् । अतः यदि भवान् स्वस्य वामकर्णं दद्यात् तर्हि तं नीत्वा साम्यं परिशील्य भवदीयं कर्णम् अन्विष्य उभयम् अपि प्रत्यर्पयिष्यामि । तावत्पर्यन्तं मम एकां नौकां भवदधीनां करिष्यामि । अतः आदौ भवान् स्वस्य वामकर्णं ददातु'' इति उक्तवान् ।

वामकर्णस्य दानं न अङ्गीकृतवान् एककर्णः । अतः राजा निर्णयं श्रावितवान् यत् एतस्मै एककर्णाय नौका दातव्या नास्ति इति ।

अनन्तरं जयरामः राजानम् उद्दिश्य - ''प्रभो ! मम पिता मरणानन्तरं मीनजन्म प्राप्य नौकाचालने मम साहाय्यं कुर्वन् आसीत् । तं बकरूपी एतस्य पिता खादितवान् । अतः एव अहं बकं मारितवान् । मीनरूपी मम पिता यदि न स्यात् तर्हि अहम् एतं द्वीपं न आगमिष्यम् एव'' इति उक्तवान् ।

एतत् श्रुत्वा राजा निर्णयं श्रावितवान् यत् धीवराय अपि जयरामेण नौका दातव्या नास्ति इति ।

अनन्तरं जयरामः सप्ताहं यावत् तस्मिन् देशे स्थित्वा राजातिथ्यं प्राप्य राजतः बहूनि उपायनानि अपि प्राप्य चतसृभिः नौकाभिः सह सन्तोषेण स्वदेशं प्रतिगतवान् ।



# चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

विजितां शीर्षिकां डिसेम्बर् - १९९७ मासे प्रकटयिष्यामः ।



MAHANTESH C. MORABAD



MAHANTESH C. MORABAD

* उपरितनं चित्रद्वयं पश्यन्तु । * युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा अक्टोबर् - २० तः पूर्वम् एव प्रेषयन्तु । * अनन्तरम् आगतां शीर्षिकां न परिशीलयिष्यामः । * स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति । * शीर्षिका समपत्रे (पोस्ट-कार्ड्) एव लेखनीया । तत्र अन्यः विषयः न लेखनीयः । * अधोनिर्दिष्ट-सङ्केताय शीर्षिका प्रेषणीया ।

**चन्दमामा(संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, २ घट्टः, गिरिनगरम्, बेङ्गलूरु - ५६० ०८५**

'अगस्ट्'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः -

प्रथमचित्रम् - **सान्निध्यात् आनन्दः ।**

द्वितीयचित्रम् - **स्मरणेन विवर्धते ॥**

प्रेषकः - बि. वेङ्कटेश्वरराव्, ४-९-१६०/३, विनायकनगरम्, आर्.टि.सि.कालोनी, हयातनगर (आ.प्र)


# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते)- रू. ७२-००

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु -

डाल्टन् एजन्सीस्, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास् - ६०० ०२६

Printed by B.V. REDDI at Prasad Process Pvivate Ltd., Chandamama Building, Chennai- 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, 188, N.S.K.Salai, Vadapalani, Chennai- 600 026 (India) Editor : NAGI REDDI.


CHANDAMAMA

